ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUATERLY RESEARCH JOURNAL)

३७ वर्षे तृतीयचतुर्थाङ्कौ ( जुलाई-अक्टूबरमासाङ्कौ ) २०१२ ई०

प्रधानसम्पादकः
प्रो० राधावल्लभत्रिपाठी
कुलपतिः

सम्पादकः
प्रो० रमेशकुमारपाण्डेयः

सहसम्पादकः
डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUATERLY RESEARCH JOURNAL)

३७ वर्षे तृतीयचतुर्थाङ्कौ ( जुलाई-अक्टूबरमासाङ्कौ ) २०१२ ई०

प्रधानसम्पादकः

प्रो० राधावल्लभत्रिपाठी

कुलपतिः

सम्पादकः

प्रो० रमेशकुमारपाण्डेयः

सहसम्पादकः

डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६

## शोधप्रभा-प्रकाशनपरामर्शदात्रीसमितिः



## निर्णायकमण्डलसदस्याः



ISSN :- 0974 - 8946

३७ वर्षे तृतीयचतुर्थाङ्क (जुलाई-अक्टूबरमासाङ्कौ) २०१२ ई०



मुद्रकः
अमरप्रिंटिंगप्रैसः
दिल्ली
amarprintingpress@gmail.com

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# पुरोवाक्

भारतीयशास्त्रपरम्परायाः उद्भवस्य समुन्मेषस्य विकासस्य च ऐतिह्यं युगचतुष्टयं क्रोडीकरोति। आवैदिककालात् विक्रमपूर्वं प्रथमसहस्राब्दं यावत् उद्भवकालः, विक्रमपूर्वः प्रथम सहस्राब्दः समुन्मेषकालः वैक्रमसंवत्सरस्य प्रथमसहस्राब्दो विकासकालः द्वितीयसहस्राब्दान्तर्वर्ती तदतिरिच्य च अद्यावधि प्रवर्तमानस्तुरीयश्च युगो व्याख्यानकालः। तुरीये व्याख्यानकाले नवचिन्तनप्रत्यग्रता धूमिलतां गतेति न मन्तव्यम्। वस्तुत आधुनिके युगे पाण्डित्यपरम्परा कामपि सम्पन्नतां प्रथयति सुरसरस्वत्याः। विगतेषु दशशताब्देषु संस्कृतपाण्डित्यपरम्परायां केवलं टीका एवाटीकिताः न किमपि नवीनं चिन्तनं मौलिकी उद्भावना शास्त्रप्रकर्षश्च समजनि इति वैदेशिकानां प्रायोवादः सर्वथा मिथ्यैव। वस्तुतः विगतात् सहस्राब्दात् साम्प्रतिकं समयं यावत् शास्त्रपरम्परा आत्मानं नवीचकार। ऊनविंशशतके विंशशतके च संस्कृपराम्परायाम् अनुसन्धानस्य नवा दिश उन्मीलिताः, चिन्तनस्यापि नवप्रस्थानानि समुन्मीलितानि। तास्ताः शोधपत्रिका अपि एतादृशनूतनानुसन्धानप्रवृत्तीनां नवचिन्तनप्रस्थानानां च प्रस्तुतये उपकरणतामुपकारकतां च ययुः। साम्प्रतिके समये एतासां शोधपत्रिकाणां संख्या क्रमेणाभिवृद्धिं यान्ती परिलक्ष्यते।

अथैतासु भारतदेशाद् विदेशेभ्यश्च प्रकाश्यमानासु भारतीयविद्याविषयकबहुसंख्यकशोधपत्रिकासु श्रीमल्लालबहादुरशास्त्रिराष्ट्रियंसस्कृतविद्यापीठस्य पत्रिका शोधप्रभा कामपि प्रभां प्रकटीकुर्वती प्रौढानां पण्डितानां प्रज्ञापरिष्कारं, यूनां य विदुषां प्रतिभाया नवोन्मेषं परिचाययन्ती चकास्ति। वस्तुतः संस्कृतपरम्परायाम् अस्मदनूचानैरनुसन्धानस्य मानदण्डविशेषाः स्थापिताः। जयन्तभट्टस्तु–

**कुतो या नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः।**
**वचोविन्यासवैचित्र्यमात्रमत्र विभाव्यताम्।।** न्यायमञ्जरी, प्रमाणप्रकरणम्

इति कथयन् वचोविन्यासस्य तद्विभावनायाश्चानितरसाधारणं महिमानं सूचयति। एतादृशस्य वाग्विन्यासस्यादर्शं भव्यं समुज्ज्वलं च स्वरूपं विशदीकृतं महाकविना भारविनेत्थम्–

**प्रसादरम्यौजस्वि गरीयो लाघवान्वितम्।**
**साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम्।।**

**न्यायनिर्णीतसारत्वान्निरपेक्षमिवागम ।**
**अप्रकम्प्यतयाऽन्येषामाम्नायवचनोपमम्।।**

**अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम्।**
**औदार्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव।।**

इदमीदृग्गुणोपेतं लब्धावसरसाधनम्।
व्याकुर्यात् कः प्रियं वाक्यं यो वक्ता नेदृगाश्रयः।। किरातार्जुनीयम् 11/38-41

अनुसन्धानप्रवणाः नूतनशोधकर्तारोऽभिव्यक्तेरेतादृशे प्राञ्जलं रूपमवश्यं साधयेयुः।

अथ शोधप्रभा प्रकृते नवीनेऽस्मिन् स्वकीये स्फुरणे सीतामहिम्ना महिमान्विता, यज्ञकर्मणि अध्वर्युधौरेयतां विभावयन्ती, प्रमाणविमर्शपरिष्कारं प्रकटयन्ती, वेदानुगामतां धारयन्ती, पशु-पाश-विवेचन-पुरस्सरं पर्यावरणसंरक्षणप्रश्नान् समादधती चरित्रनिर्माणे वेदान्तदर्शनभूमिकां विशदयन्ती, शब्दस्य नित्यानित्यतां विमृशन्ती विविधानां शास्त्राणां विविधानां साहित्यविधानां च अस्पृष्टान् पक्षान् प्रख्योपाख्याप्रसरसुभगेन सरस्वत्यास्तत्त्वेन विदुषां शोधकर्तृणां क्षोदक्षमं विचारितसुस्थमवदानं सञ्चित्य पुनराविष्करोति नूतनं स्वं कलेवरम्। एतस्याः प्रकाशनसदुद्यमे अनुत्तमं कौशलं प्रकटीकृतवन्तः शोधप्रभासम्पादकाः आचार्यरमेशकुमारपाण्डेयाः समं च सर्वेऽस्या अनुसन्धातारो लेखकाः साधुवादपात्रं सन्ति। इतश्च भूयोऽपि समुज्ज्वलं शास्त्रादिचिन्तनप्रभा शोधप्रभा प्रकटीकरिष्यतीत्याशासे।

**प्रो. राधावल्लभः त्रिपाठी**
**कुलपतिः**

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

विश्वविद्यालयानुदानायोगस्य निर्देशात्प्राय: सर्वत्र विश्वविद्यालयेषु सम्प्रति शोधप्रविधे: प्रशिक्षणं महताऽवधानेन दीयते। शोधक्रियाविधे: मुख्यतो निम्नलिखितानि अङ्गानि सन्ति-सामग्रीसङ्कलनम्, संगृहीतसामग्रया: परीक्षणम्, विश्लेषणसंश्लेषणे, वर्गीकरणम्, निष्कर्षश्च। सामग्रीसङ्कलनम् आश्रयते आधारस्त्रोतसां सम्यग्ज्ञानम्। साहित्यिकशोधार्थिनां कृते मूलाधारत्वेन पुस्तकालया: भवन्ति तत्रापि पाण्डुग्रन्थसम्पानशीलानां कृते हस्तलिखित: ग्रन्थानां ग्रन्थालया:। भारतस्य विविधेषु क्षेत्रेषु प्राचीनकालादेव प्रसिद्धानि। विद्याकेन्द्राणि पुस्तकसंग्रहरूपेण प्रसिद्धानि सन्ति। तत्र ग्रन्थतालिका: मुद्रिता: अमुद्रिता: वा समुपलभ्यन्ते यया पाठकस्य महत्सौविध्यं जायते। साम्प्रतिके युगे सर्वं सङ्गणकमाध्यमेन अत्यन्तं सहजतया द्रष्टुं शक्यते। प्रकाशितानाम् अप्रकाशितानां ग्रन्थानां सूची अन्तर्जालमाध्यमेनापि द्रष्टुं शक्यते। येन समयस्य अपव्ययो न भवति श्रमाधिक्यमपि न भवति। अधुना अन्तर्जालमाध्यमेन अथवा ई-पुस्तकालय-सदस्यत्वेनापि बहूनां पुस्तकाकनां प्राप्ति: सङ्गणकमाध्यमेन सम्भवति अनेनापि विधिना पुस्तकप्राप्त्या शोधच्छात्राणां समयस्य श्रमस्य च हानिर्न भवति। अत: वर्तमानकाले शोधकार्ये गुणवत्ताधानार्थं सर्वेषां कृते सङ्गणकयन्त्रपरिचालननैपुण्यं नितरामपेक्षितमस्ति।

सामग्रीसङ्कलनस्य कृते यावत्योऽपि पद्धतय: इदानींयावत् प्रवर्त्तिता: तासु सर्वासु टिप्पणविधि: सर्वोत्तम:। अनुसन्धानस्यायं सामान्यविधि: प्राचीनकालादेव प्रवर्तते। विधिममुमेवाश्रित्य शोधच्छात्र: विभिन्नेभ्य: स्त्रोतेभ्य: समधिगतां शोधसामग्रीं संगृह्णाति यां पश्चाद् अर्थात् शोधप्रबन्धलेखनकाले प्रयुनक्ति। अस्मिन् विधौ पत्रखण्डानाम् उपयोगं करोति छात्र:। पत्रखण्डेषु टिप्पणीलेखनसमये सन्दर्भस्य सावधानतया उल्लेख: अपेक्षितो भवति। झटितिलेखनेन अथवा शीघ्रतावशाद् यदि सन्दर्भस्य कश्चन अंश: अवशिष्ट: अथवा अशुद्ध: जायते तदा महत् काठिन्यं भवति। विशेषत: पादटिप्पणीप्रदाने सन्दर्भस्य सम्मुल्लेखने। वस्तुत: शोधलेखस्य निर्माणे सामग्रीसङ्कलनं तस्य च सदुपयोग: उभयमपि महत्त्वपूर्णं भवति।

शोधप्रभाया: संयुक्ताङ्के अस्मिन् संस्करणे विविधविषयविश्लेषपरा: त्रयोविंशति: लेखा: प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रिय: संवर्धनार्थमभ्यर्थये सुमनस: विदुष:।

**प्रो. रमेशकुमारपाण्डेय:**
सम्पादक:

# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग



## English Section

# श्रीसीतामहिम्नि शास्त्रीयो दृष्टिनिक्षेपः

**प्रो. जयकान्तसिंहशर्मा**

सीतेति पुण्यं नाम भगवतोऽप्यन्तरङ्गतत्त्वस्य, पाथेयं पतिव्रतानां, परमाश्रयो भक्तानां, वशीकरणं मोक्षश्रियः, विरमणं सकलापदां, दृढतर-समाश्वासनं दीनानां, किम्बहुना द्व्यक्षरलक्षणमेव तद्वैदिकसंस्कृतेः। कदाचिदपि यच्चित्तं सर्वमनोऽभिरामाद्रामान्नापसर्पति, पातिव्रत्यस्य विमलरुचिर्नृत्यतीवाक्षिलक्ष्यीभवति यच्चरित्रस्मरणेन। यदीयं निरुपमं वात्सल्यं निःसीमधैर्यमतुलनीयं पातिव्रत्यम्, अनुपमं मार्दवमनुपमेयं शीलं प्रपन्नेषु चामोघं कारुण्यं सर्वत्र प्रकाशते संस्कृतवाङ्मये। यदीयञ्च सौम्यं सुस्निग्धं हृदयं विलोक्याग्निरपि चन्दनायते। या चाप्रतिमतपस्विनी परमात्मप्रेप्सूनां साधनशिक्षिका तपश्चरणाचार्या, यदशेषचरितं स्वकल्पनयाप्याकलयितुं न प्राभवत्कोऽपि कविरद्यावधि। तामेवामृतमयीं परमाह्लादमयीं राममयजीवितां भगवतीं सीतेति व्याहरन्ति महर्षयः। यदायत्तमखिलं वर्तमानं, यन्निबन्धना भगवतोऽपि भगवत्ता, यन्मूलं रमयतां वस्य रामस्य रामत्वं, किमधिकं यदाश्रित्य परिस्फुरति दृग् दृश्यञ्च, सैव प्रेमास्पदम्, ज्ञात्वाज्ञात्वा च जगत्तामेवोपास्ते, सैव सर्वत्राधत्ते सत्तां स्फूर्तिं सरसताञ्च। या च स्वयमशेषशक्तीनां मूलभूता, अनन्तकोटिब्रह्माण्डाधीश्वराधीश्वरी अचिन्त्योदयस्थितिलया अनन्तकल्याणगुणनिलयभूता महालक्ष्मीसहस्रसेवितपादपल्लवा श्रियामपि श्रीः, रघुनन्दनप्राणवल्लभा। यद्यपीयमयोनिजा तथापि जनकस्य देवयजनलाङ्गलपद्धतौ देवैः सकरुणं सम्प्रार्थ्याविर्भाविता। यथोक्तं भगवता श्रीमद्वाल्मीकिना- **जनकस्य कुले जाता देवमायेव निर्मितेति।**[1] तद्वैभवमाह भवभूतिरेवम् –

> **विश्वम्भरा भगवती भवतीमसूत राजा प्रजापतिसमो जनकः पिता ते।**
> **तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां येषां कुलेषु सविता च गुरुवर्यञ्च॥**[2]

न तावदियं मैथिली सीरध्वजस्यैवापितु मिथिलाभवानामतीतानागतानां राजर्षीणामतिपवित्रेण निजचरित्रेण पावनी अलङ्कारभूता, सदाशयतापूर्णं यच्चरितं, मर्यादाशीलतायाः सा मौक्तिकमाला, यया सस्पृहमात्मानम-लङ्कृत्यापूर्वामेव श्रियमश्नुते भारतीयकुलबधूः, यामनसूययापि स्तुतां विदेहवंशवैजयन्तीं संस्मृत्य संस्मृत्य तथाविधदुरत्ययमपि पातिव्रत्यासिधारं ससुखमारोहति ललनाजनः। यदीयं महाभिजात्यं संस्तुत्य प्रत्यभिजानाति तां वाल्मीकिः –

---

1. वा. रा. 1-1-27
2. उत्तररामचरितम् 1.9

**इयं सा धर्मशीलस्य जनकस्य महात्मनः।**
**सुता मैथिलराजस्य सीता भर्तृदृढव्रता।।**[3]

न केवलं वेदवेदान्तप्रतिपाद्यत्वात्पुरुषोत्तमत्वाद्वा श्रीरामस्य परत्वमपितु सर्वथाभिमतानुरूपसहधर्मिणीविशिष्टतयापि सर्वोत्तमत्वम्, ईश्वरत्वशङ्कास्पदानां ब्रह्मविष्णुरुद्राणामपि अग्न्यादिभिरैकराश्यसिद्धेः हिरण्यगर्भादीनामपि तदपेक्षयाऽसाधारणत्वात्तत्तत्पत्नीभ्यः सर्वमङ्गलास्पदत्वेन प्रमाणसिद्धायास्तस्याः श्रीराघवेन्द्रदिव्यमहिष्या उत्तमत्वं सिद्ध्यति। अत एवाहादिकविरपि – **सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूरिति।**[4] न केवलमस्या लीलाविभूतौ पतिसम्बन्धप्रयुक्तः प्रकर्षः, अपितु विभूतिसम्बन्धेनापि। नित्यधाम्नि श्रीसाकेते श्रीहनुमदादिनित्यानां मुक्तानामप्येतत्परिजनपरिच्छेदभावेनैवावस्थानां विद्यते। नित्यविभूतावपि सृष्ट्यादिकारणभूतस्य भगवतो रामचन्द्रस्य तादृशकारणतां स्वापाङ्गैः प्रसाधयन्ती रामवल्लभा तस्य परत्वस्योत्तम्भिका भवति। स्वकीयापाङ्गैरङ्गीकारसूचिकया नयनलीलया स्वानुमोदनेन चेयं तादृशविधानव्यसनं सफलयति, अन्यथा जगत्सृष्ट्यादिलीला विरसा स्यात्, तदुक्तं श्रीवत्साङ्कमिश्रेण– **यस्या वीक्ष्य मुखं तदिङ्गितपराधीनो विधत्तेऽखिलम्। क्रीडेयं खलु नान्यथास्य रसदा स्यादैकरस्यात्तया।।** इति। यथा चेयं वाल्मीकिपदधोरणी –

**स्मितविकसितगण्डं क्रीडविभ्रान्तनेत्रं मुखमवनमयन्ती स्पष्टमाचष्ट सीता।**

सेयं रामप्रिया तदितरसर्वशेषित्वेन प्रथिता साकेतभवनस्य मङ्गलदीपरेखा भुवि दयनीयजीवदशां दर्शं दर्शं कारुण्यात्तदुद्दिधीर्षया निदानं भवति आत्मनो भगवतश्चावताराणाम्, **राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनी**ति व्यासोक्तेः। उभयभूतिनायिकाया दिव्यमहिष्या नित्यानपायिन्याः स्वसङ्कल्पनियता भवति स्वतन्त्रलीला। परस्परविश्लेषशोकप्रसङ्गरहितयोरपि तदभिनयमात्रमेव। भक्तरक्षादीक्षाया लीलाविभूतौ भगवन्तमनुधावन्त्यास्तस्या भगवतश्चोच्चावचं क्लेशमनुसन्धाय उद्वेलप्रेमभराविलस्वान्तैर्भक्तैः कृतेयं गुणनिन्दापि पर्यायोक्त्या व्याजसरण्या स्तुत्यामेव पर्यवस्यति –

**नेतुर्नियसहायिनी जननि नस्त्रातुं त्वमत्रागता।**
**लोके त्वन्महिमावबोधबधिरे प्राप्ता विमर्दं बहु।**
**क्लिष्टं ग्रावसु मालतीमृदुपदं विश्लिष्य वासो वने।**
**जातो धिक्करुणां धिगस्तु युवयोः स्वातन्त्र्यमत्यङ्कुशम्।।**[5]

हा हन्त, मातः कथमिव त एतावान् कारुण्याग्रहो निष्ठुरेऽपि जगति? मिथ्यारोपेण जीवनधनादपि वियोजयितारं वनवासेन चरणसङ्घट्टनेन व्यथयन्तमिमं लोकं धिक्। क्वेदं निर्व्याजकारुण्यं क्वेदं निर्दयं जगत्। प्रकृतपद्ये अवग्रहबलेन वनं जलं तद्विरुद्धेऽवने वह्नौ वास इत्यपि व्याख्यातुं युक्तम्। यथा

3. वा. रा. 5-16-15
4. वा. रा. 1-1-27
5. श्रीगुणरत्नकोशे 53

लोके पृथिव्यां जनाःस्वसुखसाधनाय कर्षणखननाद्युपद्रवान् कुर्वन्ति, तान् ज्ञात्वपि पृथिवी प्रत्युपकारं कर्तुं नेहति प्रत्युत स्वव्यथामपि न प्रकटयति तथैवेयं पार्थिवी नित्यक्षमाशीला जयन्तादिकृताक्षम्यापराधान् क्षाम्यति। वनं गन्तुमुद्यता कैकेयीप्रदत्तवल्कलं हस्त आदाय **कथन्नु चीरं बध्नन्ति मुनयो वनवासिन**[6] इति स्वकान्तं पृच्छन्तीं मुग्धां विलोक्य वसिष्ठादीनामपि धैर्यं विलुप्तम्। अतस्तेनोक्तं जानकीवनगमनं निषेधता –

**आत्मा हि दारा सर्वेषां दारसंग्रहवर्तिनाम्।**
**आत्मेयमिति रामस्य पालयिष्यति मेदिनीम्।।**[7]

अत इयन्तदात्मा, आत्मा स्वशरीरे निगूढस्तिष्ठति। नाम्नैवास्या दुष्टाचरणस्यात्यन्तासम्भावनीयता सहिष्णुता च गम्यते। यथा चाहादिकविः –

**सर्वान् भोगान्परित्यज्य भर्तृस्नेहबलात्कृता।**
**अचिन्तयित्वा कष्टानि प्रविष्टा निर्जनं वनम्।।**[8]

तथाविधरावणसमक्षमपि स्वरूपनिरूपकं तन्निर्भयवचनं सदाचारप्रवणत्वमुद्गिरदाह मधुमयभणितीनां मार्गदर्शी महर्षिः –

**शक्या लोभयितुं नाहमैश्वर्येण धनेन वा।**
**अनन्या राघवेणाहं भास्करेण यथा प्रभा।।**[9]

**चरणेनापि सव्येन न स्पृशेयं निशाचरम्।**
**रावणं किं पुनरहं कामयेयं विगर्हितम्।।**[10]

युक्तमाह कविकुलगुरुः– **लङ्केश्वरप्रणतिभङ्गदृढव्रतं यद्वन्द्यं युगं चरणयोर्जनकात्मजाया**[11] इति। अतिमसृणं पङ्कजरजोऽपि तस्याः पादारुन्तुदं भवति, चेटीनां भृशावलोकनमपि अङ्गग्लानताहेतुर्भवति, अथापि साह – भर्तृवाल्लभ्यप्रकर्षादेव विश्लेषभीरुः सहनयनाग्रहगर्भं वचनम् –

**अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्।**[12]

---

6. वा. रा. 2-37-12
7. वा. रा. 2-37-24
8. वा. रा. 5-16-19
9. 5-21-15
10. 5-26-6
11. रघुवंशे त्रयोदशे सर्गे - 78
12. वा. रा. 2-27-7

करपात्रस्वामिनस्त्वाहुः – सुषमाकामधेनुसौन्दर्यपयोराशिजन्यनवनीतनिर्मितं तत्स्वरूपम्, कमलादपि पेशलचरणा [illegible]धिष्ठात्री राजराजेश्वरी महात्रिपुरसुन्दर्यपि बहुभिर्हेतुभिस्तस्या उपमानपदवीं नार्हति।[13] स्वामिपादानामेतावत्कथनन्त्ववितथमेव यदैश्वर्यलक्ष्मी–विजयलक्ष्मी–माधुर्यलक्ष्मी–मोक्षलक्ष्मी–प्रभतयः समस्तलक्ष्म्यस्तत्र सहसैवोपतिष्ठन्ते यत्र श्रीसीताकृपाकटाक्षलेशोन्मेषो भवति। श्रीतुलसीदासानुसारं जानकी त्वनुपमेया, लक्ष्मीरपि कलङ्किचन्द्रसहोदरत्वाद्विषवारुणीसाहचर्यात् क्षीरोदधिजन्यत्वाच्च न तत्साम्यं यास्यति, रूपवत्कच्छपमाश्रित्य शोभारज्ज्वा शृङ्गारमन्दरसहकारेण सौन्दर्यसुधापयोनिधेः रतिनाथपाणिभ्यां मन्थनेन समुत्थिता अप्राकृतलक्ष्मीरपि कदाचिदेव तत्साम्यं भजेदिति किमुत रक्षोरुधि राशनभीषण–भैरवी करालवदना काली वा। यदि प्रेमसारसर्वस्वं रामस्तदा सौन्दर्यसारसर्वस्वं सीता। रुचिकरमपि खाद्यं घृतशर्करायोगेन समधिकस्वादुतरं सत् सर्वस्पृहणीयं भवति तथैवानया ब्रह्मतत्त्वम्। यत्प्रपदनमात्रेण सर्वविधं तपस्तप्तं, हुतं स्तुतं, दत्तमाचरितं भवति किमधिकं कैवल्यमपि करतलायते। अस्या अनुग्रहलेशोऽपि अनन्तानिष्टनिवृत्तेरनन्ताभ्युदयसिद्धेश्च कारणं भवति, अतो नोपचारविशेषाग्रहः – **प्रणिपातप्रसन्ना हि मैथिली जनकात्मजेति**[14] रामायणोक्तेः। मङ्गणसंहितानुसारं सस्पृहमीष्यमाणं करुणानिरीक्षणं लोकेशेशविभूतीनां कारणम्। तेनैव जगदिदं निरुपद्रवञ्च तिष्ठति, उपेक्षामात्रेण यन्निरीक्षणालाभतश्च नष्टं भवति न तु कोपतः, कः कुप्येद्वानरोत्तमेति वदन्त्यास्तस्याः कोपोदयासम्भवात्। अत एव पुरुषकाररूपायाः श्रीरामवल्लभायाः सर्वसमाश्रयणीयताज्ञापनाय तल्लोकोत्तरवैभवं प्रकाशयितुं श्रीसम्प्रदायाचार्यो भगवान् श्रीरामानन्दाचार्यः प्रसादसम्पत्प्रार्थनामुखेन युक्तं बभाण –

> **ऐश्वर्यं यदपाङ्गसंश्रयमिदं भोग्यं दिगीशैर्जगच्-**
> **चित्रं चाखिलमद्भुतं शुभगुणा वात्सल्यसीमा च या।।**
> **विद्युत्पुञ्जसमानकान्तिरमितक्षान्तिः सुपद्मेक्षणा।**
> **दत्तान्नोऽखिलसम्पदो जनकजा रामप्रिया सानिशम्।।**[15]

भगवत्स्वरूपादिषु किञ्चिदपि सीतयानन्वितं नास्ति, पञ्चरात्रे त्वस्य विस्तरः। श्रुतिरेकतस्तां **रामसन्निधिवशाज्जगदानन्ददायिनीमाह**[16] अपरतश्च तत्सान्निध्याद्भगवत्पोषणं निरूपयति– **श्लिष्टः कमलधारिण्या पुष्टः कोसलजात्मज**[17] इति। रामवलोकनतत्परामिति।[18] श्रुत्यर्थमेव भवभूतिराह ललितसरण्यास्**स्नपयति हृदयेशं दुग्धकुल्येव दृष्टिरिति।**[19] तादृशनिरीक्षणेन जीवविषयककोप–विस्मारणेनानुकूल्यं सम्पादयति। वस्तुतस्तस्याः सादरपूर्णनिर्वर्णननित्यपात्रं भगवान् राघवेन्द्र एव, ब्रह्मादयस्तु नान्तरीयककटाक्षशीकररक्षणलक्ष्यम्। सत्यमाह कटाक्षनिपेक्षस्यैश्वर्यम्– **यद्भ्रूभङ्गा प्रमाणं**

---

13. रामायणमीमांसा – प्रथमाध्याय 2.1
14. वा. रा. 5–27–46
15. वै. म. भा. – 2
16. रामतापिन्युपनिषद् 3–3
17. रामतापिन्युपनिषद् 3–8, 9
18. रामरहस्योपनिषद् 2–97
19. उत्तररामचरितम् 3–23

**स्थिरचररचनातारतम्यं मुरारेरिति।**[20] अन्वयव्यतिरेकाभ्यां देवादीनामैश्वर्यं तत्कटाक्षाधीनम्। स्थावरजङ्गमात्मकं जगद् भगवान् यत्कटाक्षतारतम्यं विलोक्यं तारतम्येन सृजति।

वस्तुतस्त्वभवाय मातृत्वैकरूपा जानकी एव प्रपदनीया, तावतैव सकलेष्टसिद्धेः। सर्वाभयहेतुः सर्वेश्वरो राघवेन्द्रोऽपि तदभिमतं नातिक्राम्यति। स हि तस्यां चाटुचञ्चुमनोरथ एवातस्तस्याः प्रसादे **क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु**[21] इति वदतः सर्वेश्वरादपि भयं नास्ति। सर्वापेक्षितदाने तयोः समानाभिप्रायत्वम्। एतेन परस्परानुकूलतया सर्वत्र व्यापारे सामरस्यं प्रतीयते। यथाभाणि वाल्मीकिना-

**अस्या देव्या मनस्तस्मिन् तस्या चास्यां प्रतिष्ठितम्।**
**तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति।।**[22]

उभयोरानुरूप्यन्त्वेतेन सिद्ध्यति-

**तुल्यशीलवयोवृत्तां तुल्याभिजनकलक्षणाम्।**
**राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा।।**[23]

तथापि माता हि हितादपि पुत्रस्य प्रियमेव पश्यति, पिता तूभयं पश्यति। प्रतापोष्मलपितृत्वदुरासदभगवत्समाश्रयसिद्धये वात्सल्यनिर्भरजानकीसमाश्रयणमेव युक्तम्, अनुग्रहैकस्वभावायाः कदाचिदपि निग्रहासम्भवात्। **आनृशस्यं परो धर्म**[24] इति स्मारयन्त्या नृशंसत्वप्रसङ्ग एव नास्ति, निग्रहरुचिस्तु अत्यन्तापकारिष्वपि न सम्भवति। **चन्द्रमा मनसो जात**[25] इत्युक्तरीत्या शीताशयोऽपि भगवान् अविच्छिन्नमहापराधान् जीवान् अवलोक्य यावद् मनाङ् निग्रहाभिमुखो भवति, तदैव इह दोषैकाश्रये जगति निर्दोषः कः, दोषदर्शनेन तव मनःकालुष्यं न युक्तमित्येवमपराधक्षमापनयोग्यैरालोकालापनीवीश्लथनादिभिरुपायैर्विस्मार्य वात्सल्यातिशयात् स्वजनयति श्रीजानकी। प्रथितमेव पितुर्हितपरत्वं मातुश्च प्रियपरत्वम्। यथोक्तं श्रीगुणरत्नकोशे-

**पितेव त्वत्प्रेयान् जननि परिपूर्णागसि जने।**
**हितस्त्रोतोवृत्या भवति च कदाचित्कलुषधीः।**
**किमेतन्निर्दोषः क इह जगतीति त्वमुचितै-**
**रुपायैर्विस्मार्य स्वजनयसि माता तदसि नः।।**[26]

---

20. श्रीगुणरत्नकोषः 4
21. गीता 16-19
22. 5-15-12
23. 5-16-5
24. वो. रा. 5-38-39
25. यजुर्वेदः 31-12
26. श्रीगुणरत्नकोश, 52

वस्तुतस्तु सीता लक्ष्म्या अपि परात्परेति सर्वथा पदार्थसमन्वयाच्छ्रीपदेन सीताया ग्रहणं न तु लक्ष्म्याः, श्रीश्च ते लक्ष्मीश्च पत्न्यावित्यत्र भेदबोधकद्विवचननिर्देशाच्छ्रीपदस्य च पृथगुपादानात्। आम्नायसमाम्नातश्रीरामभक्तिपरम्परायां रामानन्दीयश्रीसम्प्रदायशब्देऽपि श्रीशब्दबोध्यं निपुणं विवृणोति श्रीमदग्रदेवाचार्यः - श्रीशब्देन समस्तसमाश्रयणीया परमात्माश्रितानिखिलदोषनिहन्त्री श्रीरामं भगवन्तं चेतनाचेतनविज्ञापनं श्रावयन्ती स्वगुणैरखिलं विश्वं पूरयन्ती भगवती सीतोच्यते।[27] उक्तार्थं पुष्णाति वैशणवमताब्जभास्करोऽपि। सकलार्थलाभाय श्रियो घटकत्वन्तु षड्विधव्युत्पत्तिबललभ्यम्-

**श्रिताप्यन्यैस्सर्वैः श्रयसि रमणं संश्रितगिरः।**
**शृणोसि प्रेयासं श्रितजनवचः श्रावयसि च।**
**शृणास्येतद्दोषान् जननि निखिलान् सर्वजगत**
**गुणैः श्रीणासि त्वं तदिह भवतीं श्रीरिति विदुः॥**

अस्यामेव च सीतापदार्थोऽपि सिनोति आबध्नाति, वशीकरोति, सौभाग्यफलचारुतया भगवन्तम्। सीयते च तद्गुणमहिम्ना स्वयमपीति व्युत्पत्तेः। अत उच्यत आदिकविना- गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभिवर्धते।[28] वस्तुतस्तु नैषा श्रीरपितु श्रियोऽपि श्रीः, यथोक्तं वाल्मीकीये मन्दोदर्या-

**वसुधाया हि वसुधां श्रियः श्रीं भर्तृवत्सलाम्।**[29]

नूनं मङ्गलानां मङ्गलमित्यादौ भगवति श्रूयमाणमङ्गलत्वं श्रीसम्बन्धादेव। अत उच्यते- **तव स्पर्शादीशं स्पृशति कमले मङ्गलपदम्।**[30] तथा हि- वस्तुन उत्कर्षस्तन्निष्ठविशेषाधीनः किन्तु विशेषस्योत्कर्षस्तु न तस्याप्यधीनः, तस्य कथात्वस्य साहजिकत्वात्। अत एव **अप्रमेयं हि तत्तेजो यस्यैषा जनकात्मजेति**[31] रामायणोक्तं युज्यते। एवं भगवति परत्वसाधिकाया भगवत्याः सीतायाः परत्वमनन्याधीनमेव। अत उच्यते- **तवेदं नोपाधेरुपनिपततिश्रीरसि यत** इति। तद्यथा पुष्पितस्य प्रशस्तिः परिमलाधीना, परिमलस्य तु सा कस्याप्यधीनेत्यशक्यं वक्तुम्। अतः परिमलस्थानीयायाः श्रीसीताया निरुपाधिकमङ्गलत्वं पर्यवसीयत। एवं निरूपणेनापि अनन्याधीनविभवत्वेन भगवन्तं गृणती श्रुतिर्न विरुध्यते। न हि स्वकीयसम्पदोत्कृष्यमाणो महाराजोऽन्याधीनो भवति, तदायत्तवैभवोऽपि रामचन्द्रः, अपराधीनप्रभाव एव। प्रभया हि रत्नस्य महार्घता, न हि तावता रत्नस्य नैयून्यमापतति नित्याश्रयत्वात्। प्रभास्थानीयता च पराम्बिकायाः स्ववचनसिद्धैव - **अनन्या राघवेणाहं भास्करेण यथा प्रभा।**[32]

---

27. श्रीमदग्रदेवाचार्यविरचितरहस्यत्रयम् 2.7
28. वा. रा. 1-77-27
29. 6-111-21
30. श्रीगुणरत्नकोषः 29
31. श्रीगुणरत्नकोषः 29
32. वा. रा. 5-21-15

भगवच्छब्दवाच्यं षाड्गुण्यं तत्पूर्वकसौलभ्यसौशील्यदयावात्सल्यादिकमात्मगुणजातं नित्यकैशोर-लावण्यादिविग्रहगुणजातं च शरण्यदम्पत्योः श्रीसीताराघवयोः समानं तथापि भगवदपेक्षया केचन विलक्षणौदार्यक्षमाप्रभृतयो गुणाः सन्त्येव, अञ्जलिभरं वहते पुरुषार्थचतुष्टयं प्रदायापि नोचितं प्रदत्तमिति सलज्जायास्तस्या औदार्यकाष्ठा। आश्रितानुद्दिश्य भगवत्यमोघः पुरुषकारः, आर्द्रापराधास्वपि राक्षसीषु निर्हेतुकी क्षान्तिरित्यादिगुणगणो देव्यन्तरादिमां व्यतिरेचयति। किम्बहुना तत्प्रीतिपारवश्यादेव तत्सन्निधौ भगवान् अपराधिनोऽपि दण्डयितुं नोत्सहते। जीवैकपक्षपातिनीयं प्रभोर्निग्रहसंकल्पमपि अनुग्रहसङ्कल्परूपेण परिणमय्य जीवधन्यतामापादयति। कस्यापि स्वसमक्षममङ्गलं द्रष्टुं नार्हति, अत एव तत्सन्निधावक्षम्यापराधं कृत्वापि जयन्तो रक्षितः, सान्निध्याभावे रावणवालिप्रभृतयो व्यापादिता इति प्रसिद्धमेव। जयन्तं विभीषणं च शरणवरणोक्तिक्षमावेव भगवान् रक्षति, शरणवरणं हि रक्षणनिमित्तम्। इयं कृपैकमतिस्तु रावणवधानन्तरं तद्वधापरिज्ञानेन अविरतापराधा राक्षसीरपि हनुमतो चित्रवधान्निवार्य रक्षितवती, तदानीमनयोक्तं वचनं वैष्णवैर्मन्त्रधिया जप्यते–

पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम।
कार्यं कारुण्यमार्येण न कश्चिन्नापराध्यति।।[33]

तस्या इमामेवातिलोकक्षमाशीलतां स्तुवन्नाह श्रीगुणरत्नकोशकारः–

मातर्मैथिलि राक्षसीस्त्वयि तदेवार्थापराधास्त्वया।
रक्षन्त्या पवनात्मजाल्लघुतरा रामस्य गोष्ठी कृता।
काकं तं च विभीषणं शरणमित्युक्तिक्षमौ रक्षतः।
सा नः सान्द्रमहागसस्सुखयतु क्षान्तिस्तवाकस्मिकी।।[34]

भगवान् बादरायणस्तु एतदीयगुणान् गायन् न तृप्यति, सङ्गृह्णाति च पतिवशीकरणगुणानेवम्–

प्रेम्णानुवृत्त्या शीलेन प्रश्रयावनता सती।
धिया ह्रिया च भावज्ञा भर्तुः सीताहरन्मनः।।[35]

परिगणयति च रम्यगुणान् तत्प्राणनाथोऽप्येवमेव तद्वशंवदः–

इयं गेहे लक्ष्मीरियममृतवर्ती नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः।।[36]

---

33. 6-113-45
34. श्रीगुणरत्नकोशः 50
35. श्रीमद्भा. 9-10-56
36. उत्तररामचरितम् 1-38

श्रीसीतानूपुरक्वाणेन विलसद्विग्रहो भगवानाम्नायस्तु तद्गुणगणौघमणिकोशगृहम्। तत्र पूर्वकाण्डे श्रीसूक्तश्रद्धासूक्त-मेधासूक्त-उत्तरनारायणसूक्तेषु अस्येशाना जगतः श्रद्धया देवो देवत्वमश्नुते, इत्यादिवाक्यैः हिरण्यवर्णा सुवर्णरजगस्त्रजा-चन्दा-लक्ष्मी-अनपगामिनी-हस्तिनादप्रबोधिनी-देवी-श्री-का-सोत्स्मिता-आर्द्रा-ज्वलन्ती-तृप्ता-तर्पयन्ती-देवजुष्टा-उदारा-प्रभृतिभिः परस्सहस्रैः पदैश्च दिव्यगुणकथनपूर्वकं तत्स्वरूपं प्रतिपाद्यते। अत एव सीतैव जगत्स्वामिनीति मत्वा तदाभिमुख्यकामनया वन्दते वेदः-

**अर्वाची सुभगे भव सीते वंदामहे त्वा।**
**यथा नः सुभगासससि तथा नः सुफलाससि।।**[37]

अत्र केचन सीता लाङ्गलपद्धतिरितिकोषादन्यथा व्याख्यातुं प्रायतन्त, तन्मुधैव जडपूजाप्रसङ्गात् सुभगेत्यादिचेतनविशेषणविषयकवन्दनाद्यनन्वयात् नित्यनिरवद्ये वेदे प्रमत्तत्वारोपाच्च। एवमेवेन्द्रः सीता निगृह्णात् घृतेन मधुना समस्तेत्यादयो मन्त्राश्चरितविशेषपरत्वेनान्वेतव्याः। श्रीसीतातत्त्वावेदिकासु सीता-राम-पूर्व-तापनीय-श्रीरामोत्तरतापनीय-रामरहस्य-तारसाराद्युपनिषत्सु स्वरूपविवेचनदृशा सीतोपनिषत् सर्वातिशायिनी। यत्र चैवं सा स्तूयते -

**इच्छाज्ञानक्रियाशक्तित्रयं यद्भावसाधनम्।**
**तद् ब्रह्मसत्तासामान्यं सीतातत्त्वमुपास्महे।।**

**मूलप्रकृतिरूपत्वात्सीता प्रकृतिः स्मृता।**
**प्रणवप्रकृतिरूपत्वात्सीता प्रकृतिरुच्यते।**

कालातीता भगवती सीता चित्स्वरूपेति तारोपनिषत् त्रिलोचनायाः शारदाम्बाया रूपेणापि सा ध्येयेत्यादिशति रामरहस्योपनिषत्-

**रामाभिरामां सौन्दर्यसीमां सोमावतंसिकाम्।**
**पाशाङ्कुशधनुर्बाणधरां ध्यायेत्त्रिलोचनाम्।।**[38]

महामैथिल्युपनिषदि राममन्त्रपरम्परां स्वयं ब्रूते मैथिली- इममेव मनुं पूर्वं मां साकेतपतिरवोचत्, अहं हनुमते मम प्रियाय इत्यादि। किम्बहुना, उपनिषदो ब्रह्मा शिवो विष्णुर्वा परतत्त्वमिति संशये श्रीसीतया नित्यसाहचर्यादेव श्रीवत्साङ्कं भगवन्तं रामं विलोक्यैव सीतापतित्वमेवेश्वरलक्षणमिति तमेव परत्वेनावधार्य तत्त्वचिन्तां तरन्ति। न केवलमुपनिषत्प्रमाणकस्तन्महिमा अपितु श्रीमद्रामायणं महाभारतं महर्षिप्रणीतं स्मृतिपुराणादिकमपि तन्महिम्नि प्रमाणम्। **काव्यं रामायणं कृत्स्नं सीताशश्चरितं महत्**[39] इति वाल्मीक्युक्तेस्तदुज्ज्वलचरित्रेणैव गुरुतरं विद्यते। वस्तुतस्तु रामायाः = सीताया अयनमेव रामायणमन्यथा अविकत्थनत्वादिलक्षणविशिष्टस्य धीरोदात्तनायकस्य रामचन्द्रस्य महानुभावं चरितं

37. ऋग्वेदः 4-57-6
38. रामरहस्योपनिषत् 2-33
39. वा. रा. 1-4-7

निबोधतेत्युक्त्वा रामायणं प्रतीक्ष्य स्वगुणश्रवणाग्रहोऽविकत्थनत्वभङ्गाद् विरुद्ध्यते। सतीचरितप्रधानत्वादेव तत्संगच्छते। तत्रेष्टां **सर्वस्य जगत**[40] इत्यादिकथनात्तस्याः माधुर्यावृतमपि परत्वन्तु तत्र तत्र प्रकाशितमेव। कृपायाः पतिपारतन्त्र्यस्यानन्यार्हत्वस्य च प्रतिपादनात्तन्महत्त्वम्। द्वितीयविश्लेषे पतिनियमनानतिक्रमणेन वाल्मीक्याश्रमे तस्या निवासात्पारतन्त्र्यं प्रकाशितम्, तृतीयविश्लेषे च पृथगाश्रयानवलम्बनेन भूमौ प्रवेशादनन्यार्हत्वं प्रकाशितम्। वेदवतीरूपेण विष्णवे तत्तपोवर्णनं लभ्यते। अद्भुतरामायणे सीतया कालीरूपेण सहस्रमुखरावणस्य वधः, सीतासहस्रनामद्वारा रामेण तत्स्तवनमित्यादिचरितवैचित्र्यं वर्णितमस्ति। एवं रामायणान्तरेऽपि तन्महिमज्ञापकचरितान्तरं विलसति। महारामायणे जानकीपदारविन्दयोश्चिह्नितानामष्टा-चत्वारिंशच्चिह्नानां विशदं वर्णनं लभ्यते। अत्रैव सीतायाः श्रीभूलीलाभिस्तिसृभिः सेव्यत्वं निर्दिश्यते[41]। श्रीभूलीलातथोत्कृष्टा कृपायोगोन्नती तथा पश्यति भृकुटीस्तस्या जानक्या नित्यमेव च कूपपतितबालरक्षणव्याकुला जननीव जीवैकपक्षपातिनी श्रीरामभामिनी विप्रशापाद्रावणादिरूपेण परिणतान् राक्षसान् उद्धर्तुं भुवि तथैवावातरत्।

दुस्सहपतिवियोगं सोढ्वापि लङ्कायां तावत्तया स्थितं हनुमतो भगवत्प्रापणाग्रहमुपेक्ष्य यावत्स्वपतिना तदुद्धारो न कारितः। अध्यात्मरामायणे च हनुमज्जिज्ञासोपशमनाय मैथिली स्वयमाह- **रामो न गच्छति न तिष्ठती**त्यादिना तत्कर्तृत्वादिकं निरस्य तत्सान्निध्यादहमेव सर्वं करोमीति। एतत्सर्वमद्वैतसिद्धान्त-प्रभावितमिव प्रतीयते।[42] आनन्दरामायणे मनोहरकाण्डे चतुर्दशसर्गे सीताकवचमष्टोत्तरशतनाम विन्यस्तमिति। अत्रैव सीतायास्त्रिरूपतायाः समुल्लेखः, सत्त्वेन रामवामाङ्के, रजोरूपेणाग्नौ, तमोरूपेण रावणनाशाय पञ्चवट्यां च निवासो निरूपितः। अद्भुतरामायणे वर्णितं रावणदुहितृत्वादिकन्तु न विशेषोपस्थापकम्। बुल्केसमीक्षितं सीताचरितं नोपादेयं करपात्रस्वामिनापि रामायणमीमांसायां भृशं तस्य दूषितत्वात्।

वेदेषु बीजतया निर्दिष्टस्य शक्तितत्त्वस्योपबृंहणं पश्चान्नानातन्त्रेषु पुराणेषु चाभूदिति विदितमेव विद्वत्सु। वैष्णवीयपाञ्चरात्रवैखानसागमेषु सीतातत्त्वं बहुधा निरूपितम्। तद्यथा-अहिर्बुध्न्य-जया-बृहद्ब्रह्म-विष्णु-सदाशिव-पाद्म-लक्ष्मी-मङ्कण-लोमश-काश्यप-हिरण्यगर्भ-वसिष्ठ-वाल्मीकि-अगस्त्याख्यसंहितासु प्रियाप्रियतमयोः श्रीसीतारामयोः नामरूपलीलाधाम्नां विशदं वर्णनमुपलभ्यते। अगस्त्यसंहितायां शिवकृतं जानकीस्तवनं **वन्दे विदेहतनयापदपुण्डरीक**मित्यादि सश्रद्धं वैष्णवमन्दिरेषु जोघुष्यते। अत्र भगवता रामेण स्वस्य सीताधीनता न्यरूपि निपुणम् -

**तदाराध्यस्तदारामस्तदधीनस्तया विना।**
**तिष्ठामि न क्षणं शम्भो! जीवनं परमं मम॥**

वाल्मीकिसंहितायां श्रुतिभिः कौ मे पितराविति पृष्टे ब्रह्मणा सीतारामयोस्तन्मातापितृत्वेन कथनं विलसति, तद्यथा-

---

40. 5-15-30
41. महारामायणे 48-13
42. अ.रा. 1-1-34, 42

**तमेव जानकीं वित्त जननीमात्मनः परामिति।** लोमशसंहिताया अष्टस्वध्यायेषु पिप्पलादलोमशसंवादे जानक्यास्तत्सखीनाञ्च सहकारेण विविधरासवर्णनं विद्यते। वाल्मीकिसंहितायामेव श्रीराममन्त्रस्य परम्परायाः समुल्लेखो विद्यते। आसु संहितासु मधुरोपासनाया बीजमपि निहितम्।

**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति**[43] श्रुत्या ज्ञानबलक्रियाशक्तिरूपेण पराशक्तिर्निर्दिश्यते। इयमेव संवित्सन्धिनी आह्लादिनीरूपेण च निगद्यते। मैथिली तु शक्तित्रयमयी। आनन्दरूपब्रह्मणो द्वैविध्यंषडैश्वर्यप्रधानं तिरोहितषडैश्वर्यं च। **कुतोऽन्यथा स्याद्रमतः स्व आत्मन**[2] इति भागवतोक्ते विश्वनाथचक्रवर्ती एवमेव परमतत्त्वं चिच्छक्तिवृत्तिभेदेन महासारेण प्रेमाख्येनानादित एव द्विधा विभक्तं भवति। अत आत्मारामो नाम सीतारमणः सीतायाः स्वरूपशक्तित्वेनात्मभूतत्वात्। मधुरोपासनायां परानुक्तेर्माधुर्ये पर्यवसानं मत्वा भगवद्रतेः प्रेमस्नेहमानप्रणयरागानुरागक्रमेण महाभावत्वं यावत्पाकानुरोधाद् गतिर्मन्यते। तत्र रूढाधिरूढक्रमेण मोदनमादनभेदभिन्नाया भगवद्रतेर्मादनभावोदयस्तु केवलं श्रीजनकनन्दिन्यामेव। रसिकाश्च श्रीराघवेन्द्रं परमपुरुषं श्रीजानकीमाह्लादिनीं मत्वोभयोरभेदाद्रसरूपतां निश्चित्य लोकोत्तरसम्बन्धकल्पनेन सखीभावेन सेवमाना मधुरलीलादर्शनेनात्मानं कृतार्थयन्ति। अत्रोज्ज्वलरसस्यालम्बनविभावरूपेण श्रीमैथिलीराघवौ स्वीक्रियेते, तत्र मैथिली नित्यकुञ्जेश्वरी नित्यकिशोरी सखीप्रणयाधीना सङ्गीताभिज्ञा गन्धोन्मादितराघवा नर्मपण्डिता उज्ज्वलस्मिता परम-कमनीया राघवहृदयेश्वरीत्यादिरूपेणाङ्गीक्रियते, राघवोऽपि प्रियामोहननवकिशोर-शृङ्गाररसोचितरसिकशेखररूपेण च। उभयोरभिमतंकैङ्कर्येण प्रसादनमेव रसिकानां जीवनोद्देश्यम्। श्रीकिशोरीकृपाभिमानिनी जीवा सखी एवमभिलषति। रामस्नेहिदासविरचिते जानकीचरितामृते सा च स्वस्वामिनीपादावनतं प्रसादनपरं कोसलकिशोरमवलोकयितुमीहते-

**यावन्न कान्तं नतमस्तकं प्रियं मानान्वितां प्राणसमां कृताञ्जलिम्।**
**सम्मानयन्तं ह्यवलोकयाम्यहं तावन्न मे जातु च शान्तिरेष्यति।।**[44]

इयं मधुरोपासकानां स्वामिनी आराध्या ध्येया गेया साध्या च। तन्नखमणिचन्द्रिकायां कोटिब्रह्मज्योत्स्नामपि न्यक्कुर्वन्ति रसिकाः। दाक्षिणात्येषु श्रीशठकोपविष्णुचित्तप्रभृतीनां जन्मसिद्धालवाराणामुत्तरोत्तरमभिवर्धमाना श्रीसीताभक्तिः प्रथतेतराम्, मिथिलाभावोपासको विष्णुचित्तः स्वपुत्रीं तुलसीवाटिकायां लब्धाविर्भावां गोदां श्रीसीतावतारतया रामं च जामातरं मत्वा तद्दास्यैकरसाभिमानेन कालमनैषीत्। लोकाचार्यैस्तु सीतापरत्वभावं दधानैरपराधपराणां कृते सौलभ्येन भगवत्प्राप्तये सीताशरणागतेरेव युक्तता प्रत्यपादि श्रीवचनभूषणटीकायाम्। यद्यपि श्रीरामानुजसम्प्रदाये तैलङ्गीयाः श्रियोऽणुत्वेन जीवत्वं निरूप्यापि प्रपत्तौ तदसाधारणमहत्त्वं समर्थयन्ति किन्तु श्रीवेदान्तदेशिकप्रभृतयस्तु श्रियो जीवत्वमसहमाना न्यायसिद्धाञ्जनादौ उभयोरपि ज्ञानानन्दस्वरूपत्वं जगदुत्पादकत्वं शेषित्वं शरण्यत्वं प्राप्यत्वं च निरूप्य दृढतरं प्रत्याचक्षत।[45]

---

43. श्वेताश्वतरोपनिषद् 6-8
44. श्रीमद्भागवतम् 5-19-5
45. न्यायसिद्धाञ्जनम् - ईश्वरपरिच्छेदः - श्रीतत्त्वनिरूपणम् पृ. 496

तद्यथा कर्मकाण्डे महेन्द्रदेवतात्वे नेन्द्रो देवता किन्तु महत्त्वविशिष्ट इन्द्रो देवता तथैव श्रीविशिष्टो भगवान् ब्रह्म शेषी वा। एवमेवास्या मम च शेषं हि विभूतिरुभयात्मिकेति वचनात् पत्युः पत्न्या अपीति लोकाच्च, उभयाधिष्ठानं चैकं शेषित्वम् अविभागस्मृतेः। पूर्वमीमांसायां षष्ठाध्याये **लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः** इति सूत्रे यजेतेत्यत्र एकत्वेऽपि स्वत्वस्योभयनिष्ठत्वादुभाभ्यां द्रव्यत्यागस्य सम्पाद्यत्ववर्णनं लभ्यते। किञ्चाग्नीषोमीययागे उभयोरपि एकदेवतात्वं यथा तथैव श्रीसीतारामयोरेकं शेषित्वम्। श्रीप्रपदनमन्तरेण भगवत्प्रपत्तिरपि न साफल्यमेति। अतः श्रीनामसम्पर्कसमुज्ज्वले रामानन्दीयश्रीसम्प्रदाये षडक्षरतारकश्रीराममन्त्रपरम्पराप्रवर्तकत्वेन सम्प्रदायाचार्यत्वेन उपायत्वेनोपेयत्वेन श्रीसीताया महत्त्वातिशयो विद्यते। एतत्परम्परानुवर्ती गोस्वामितुलसीदासोऽपि सीतावैभवं वन्दनमुखेन तथाह यथा तदैश्वर्यं समुद्गतं स्यात्–

**उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीम्।**
**सर्वश्रेयस्करीं सीतां नतोऽहं रामवल्लभाम्।।**[46]

पण्डितराजो भगवदाचार्यः श्रीसीतास्तवे श्रीदिव्यदर्शने मातृस्तवे लोकोत्तरजगदम्बाश्रयणे च भक्त्या तस्या निरुपाधिकक्षमाशीलतां न्यरूपयत्। तद्यथा–

**दशास्यो दुर्वादं व्यतनुत च मर्माविधमपि**
**तथा राक्षस्यस्तेऽपरिमितिविपत्तीररचयन्।**
**तथापि क्षाम्यन्त्या जननि करुणापुण्यजलधे–**
**र्महिम्नस्ते पारं व्रजितुमिह शक्तो भवतु कः।।**[47]

रामानन्दीये प्रपत्तिमार्गे श्रीस्वामिन्या जनकनन्दिन्यास्तावदुन्नतं स्थानं येन सकलसाधनानां पर्यवसानं तद्वरिवस्यायामेव क्रियते, तदैककृपाकटाक्षलिप्सया अद्यापि न विश्राम्यति तत्स्तुतिरचनाप्रवाहः। यथेदं श्रीरामभद्राचार्यस्य पद्यम् –

**पुरीपुरन्ध्रिकेशमल्लिकालिजुष्टनूपुरे**
**गुणावलिविलुब्धवेदभृङ्गभूरिभूसुरे।**
**दिनेशवंशमण्डिते समस्तशास्त्रपण्डिते**
**कदा विधास्यसीह मां कृपाकटाक्षभाजनम्।।**[48]

प्रायः सर्वेऽपि संस्कृतकवय ऐश्वर्यमाधुर्यमिश्रणसरण्या तच्चरितमुन्नयन्ति, तथापि वाच्यस्त्वया मद्वचनात्स राजा, दिष्ट्या अपरिहीनराजधर्मः स राजेति वचनाभ्यां भवभूतिकालिदासोल्लिखिताभ्यां

---

46. श्रीरामचरितमानसस्य बालकाण्डीयं पञ्चमं पद्यम्
47. भगवदाचार्यकृतपराम्बास्तोत्रात
48. स्वामिश्रीरामभद्राचार्यकृतश्रीजानकीकृपाकटाक्षस्तोत्रात्।

तस्या ईषत्क्षोभप्रकाशस्तु न युक्तस्तस्याः प्रकृतिसिद्धशीलाननुरूपात्। तुलसीदासस्त्वेवंविधवर्णनदोषमपाकृत्य निरूपयति। मानसे वर्णिता सीता तु स्वकान्तैश्वर्यं स्मारं स्मारं तादृशकण्टाकाकीर्णवनमार्गेऽपि भगवत्पदचिह्नयोरन्तराले विन्यस्यति स्वपदं सभीता, तथावन्दनीयपदचिह्नयोरपि स्वपद्भ्यां स्पर्शे धर्मलोपभयात्। स्वप्रियस्य युद्धाभिनयनमपि द्रष्टुमशक्तेति तादृशलीलातः प्रागेव लक्ष्मणद्वारा सा गह्वरे दूरं प्रातिपा। निग्रहलीला तु प्रतिबिम्बभूता सीतापि न सहते, रामचन्द्रकिरणरसरसिकचकोरिका भित्तौ चित्रितमपि कपिं विलोक्य बिभेति, कथं तादृशराक्षसीमध्ये तावत्स्थितेति चित्रमेव। ज्वलन्तीं लङ्कां विलोक्य हनुमतो रक्षार्थमग्नेः प्रार्थनापरा सा ब्रवीति अनुग्रहैकस्वभावा- **यदि वा त्वेकपत्नीत्वं शीतो भव हनुमत**[49] इति। मुनिजनरक्षणरूपं क्षात्रधर्ममनुसन्धाय तन्नपाशसमुद्यतं स्वरमणं ततो निवारयितुं प्रवर्तते वनवासिजनोचितानृशस्यधर्मस्मारणेन।

**जगदीश माया जानकी,**
**उभय बीच श्री सोहति कैसी। ब्रह्म जीव बिच माया जैसी॥**
**मोरि यह माया.......**

इत्यादि-मानसोक्तस्य जानकीस्वरूपनिरूपकत्वेन प्रयुक्तस्य मायाशब्दस्य न मिथ्यावचनत्व-मनिर्वचनीयत्वं वार्थः किन्तु कृपावचनत्वमेवेयं भगवतः कृपास्वरूपा शक्तिरिति तात्पर्यस्य **माया दम्भे कृपायाञ्चेति** कोषसम्मतत्वात्। मिथ्यावचनत्वे तु तद्धेयतापत्तिः। अत एव चाभासत इत्यस्य स्थाने शोभते इति प्रयोगः सङ्गच्छते। अत एव तत्प्रणयाधीनत्वादेव **मायामृगं दयितयेप्सितमन्वधावदिति।**[50] भागवतोक्तं युज्यते। तुलसीदासानुसारमग्निपरीक्षणादिकन्तु तत्र विन्यस्तायास्ततः पुनरवाप्यते, तदैश्वर्यप्रकाशनाय च। युक्तमभाणि भवभूतिना- **उत्पत्तिपूरितायाः किमस्याः पावनान्तरैः।**[51]

नूनं ललितकला यस्या नीराजनं, तादृशरमणीयमूर्तेस्तस्या विलोकनेन लज्जिता दामिनी चिरं नावतिष्ठते। वस्तुत एतत्सौन्दर्येणैव साहित्ये सौन्दर्यलक्षणमासादितम्, सौन्दर्यसृष्टिरप्यनुप्राणिता। लोके चेयमेवार्हति लोकाभिरामं स्वकान्तं तद्रहस्यं वितरीतुम्, मुखदर्शनोत्सवे कौसल्ययाऽस्या एव करपल्लवे समर्पितत्वात्। स हि नीलमणिरस्या एव गुप्तधनम्। अतः सीतास्नेहसित एवेह लोकोऽसितो भवितुमर्हति सकृद्रसाबद्धश्च नार्हत्यात्मानं मोचयितुं न चेहते रसिकः। रामप्रियाप्रसादे ब्रह्मावाप्तिस्तु सतुरामेव सिद्ध्यति भूमिजैकविस्रम्भभूमीनां तल्लुब्धं तदञ्चलोपान्ते प्रणयप्रकर्षेण नित्यबद्धं नित्यकिशोरं कमनीयं ब्रह्म अमिलित्वा क्व यास्यति? प्रस्तुतोऽयं समुद्यमो नाग्निवत्स्वरूपपरीक्षणे किन्तु तद्गुणेषु लेखनीव्यापारेण तत्प्रसादाय वन्दने।

49. वा. रा. 5-53-27
50. श्रीमद्भागवत् 11-5-34
51. उ.रा.च. 1-13)

# अष्टाध्याय्यां यज्ञकर्मणि प्लुतेविर्धानम्

डॉ. महेशदत्तशर्मा

अष्टाध्याय्या अष्टमेऽध्याये द्वितीयपादस्यान्तिमे भागे तत्रभवता आचार्येण पाणिनिना लोकव्यवहारगतानां प्लुतीनामुपदेशः कृतो वर्तते। तन्मध्ये[1] सूत्रेषु यज्ञकर्मविहिता ये प्लुतिविशेषा निरूपिता आचार्येण, तद्विषये यथामति विमर्शः क्रियते।

पाणिनिसमये वेदानामध्ययनाध्यापनयोर्व्यवस्था सुप्रतिष्ठिता आसीत्। तस्मिन् समयेऽनेकेऽनूचानाः पण्डिता आसन्। ते सर्वतोभावेन "अध्ययनं परमं तपः" इति मनसिकृत्वा अध्यनकर्मणि व्यापृता आसन्। तस्मिन् काले तेषां तपःपूतानामृषिकल्पानां श्रोत्रियाणां वाणी सर्वतोभावेन निरवद्या निर्दुष्टा च आसीत्। तत्र सर्वत्र वैदिकी याज्ञिकी पद्धतिः सुतरां सुदृढासीत्। अत आचार्येण पाणिनिना ये नियमा विहितास्तेषां विधानं याज्ञिकसम्प्रदायानुसारेणैव कृतं भवेद् इति स्पष्टमनुमीयते। अथ मन्त्रब्राह्मणानि तदङ्गभूतानि च कल्पसूत्राणि इत्येतानि याज्ञिकानां प्रमाणभूतानि आकरग्रन्था वर्तन्ते। अत एषु ग्रन्थेषु तत्र तत्र निरूपितस्य प्रस्तुतप्लुतिविषयस्य पाणिनिसूत्रैः सह तुलनायां कृतानां तत्रभवता आचार्येण एतेभ्यः कुत्र कियानंशो गृहीतः स्वीकृतश्च स्याद् इत्येतद्विषयेऽनुमातुं शक्यते।

**'ये यज्ञकर्मणि'**[2] य इत्येतस्य यज्ञकर्मणि प्लुतो भवति। ये३ यजमाहे। यज्ञकर्मणीति वचनाद् 'ये यजाम्ह इति पञ्चाक्षरम्' तै. स.[3] इत्यत्र स्वाध्यायकाले मा भूत।[4] 'ये३यजमाहे' इत्यत्रैवायं प्लुत इष्यते। तेन 'ये देवासो दिव्येकादशस्थः'[5] इति दशरात्रे षष्ठेऽहनि प्रउगशास्त्रे वैश्वदेवस्य द्वितीयायां[6] न भवति।

**'प्रणवष्टेः'**[7] टेः प्रणव आदेशो भवति। यज्ञकर्मणीत्येव पादस्य वार्धर्चस्य वान्त्यक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोङ्कारं वा विदधति तं प्रणवः इत्याचक्षते; यथा अपां रेतांसि

---

1. अष्टाध्यामाम् 88 सूत्रतः 92 सूत्रपर्यन्तम्
2. पा. सू. 8.2.88/ ३607
3. 1.6.11
4. तुलना, वा.सं. 19.24; मै. सं. 1.4.11; 1.59.21. 4.1.11; 4.4.17 आप. श्रौ 1.5.5; 2.11.4; 5.28.9; 24.1३.5–6 महाभारतम् वन 180.३0
5. ऋ. 1.1३9.11
6. आश्व. श्रौ. सू 8.1.12
7. पा. सू. 8.2.89/३608

जिन्वतो३म्'[8] इति दर्शपूर्णमासयोराग्नेयस्याज्यभागस्य पुरोऽनुवाक्यायाम्।[9]

**'याज्यान्तः'**[10] याज्यानामन्त्यो यष्टिः स प्लवते यज्ञकर्मणि यथा—'जिह्वामग्ने चकृषे हव्यवाहा३म्'[11] इति दर्शपूणसमासयोराग्नेयस्याज्यभागस्य याज्यायाम्[12]। अन्तग्रहणं केवलस्य सर्वान्त्यस्य प्लुतिप्राप्त्यर्थम्। अन्यथा वाक्यसमुदायरूपाणां याज्यानां प्रतिवाक्यं टेः प्लुतो भवेत्।

**'ब्रूहि-प्रेष्य-श्रौषड्-वौषड-आवहानामादेः'**[13] एतेषामादेः प्लुतो भवति यज्ञकर्मणि। क्रमेणोदाहरणानि अग्नेयऽनुब्रू३हि। समिद्ध्यः प्रे३ष्य। अस्तु श्रौ३षट्। सोमस्याग्ने व्रीही वौ३षट्। समिधो अग्न आज्यस्य व्यन्तू३वौ३षट्। अग्निमा३वह। अन्त्योदाहरणं देवतावाहनमन्त्र एवायं प्लुत इष्यत इति निदर्शनार्थम्, तेन 'आवह देवान् यजमानाये' त्यादौ तस्य न प्राप्तिः।

**'अग्नीत्प्रेषणे परस्य च'**[14] अग्नीधः प्रेषण आदेः प्लुतो भवति परस्य च आ३श्रा३वय, ओ३श्रा३वयं।[15] अत्रैवायं प्लुत इष्यते। तेनेह न भवति अग्नीदग्नीन्विहर बर्हिस्तृणाहीति। तदर्थं केचिद् 'विभाषा' इत्यभिसम्बध्नन्ति, सा च व्यवस्थितविभाषा, इति।

एषु सूत्रेषु निर्दिष्टः पदसमूहः सर्वयज्ञेषु अनुगतस्तथापि सुखावबोधार्थं सवेष्टीनां प्रकृतिभूतयोर्दर्शपूर्णमासयागयोस्तेषां पदानां विनियोगः कथं विहित इत्येतत् स्पष्टीक्रियते।

यजमानस्य प्रवरवरणानन्तरमर्धाविशिष्टो निगदः समाप्यते। ततो देवतानामावाहनं होत्रा कर्तव्यम्, तत्र 'अग्निमा३वह' इत्यादयः आवाहनमन्त्राः।

पुरोनुवाक्यापठनार्थम् अध्वर्युर्होतारं सम्प्रेष्यति 'अग्नयेऽनुब्रू३हि' इत्यादिना, ततो होता तद्देवतासम्बन्धिनीं ब्रूते अपर आह 'सर्व एव प्लुतः साहसमिच्छता विभाषा विज्ञेयः' इति। इहतु उद्धर३, उद्धर, अभिहर३, अभिहरेति छान्दसः प्लुतव्यत्ययः। यज्ञकर्मणीत्येव ओश्रावय।[2] पुरोनुवाक्यामन्वाह। तदवसाने च पूर्वोक्तरीत्या त्रिमात्रमाकारमोङ्कारं वा पठति।

---

8. ऋ.0 8.44.16
9. आश्व. श्रौ. 1.6, 1
10. पा. सू. 8.2.90/ ३609
11. ऋ 10.8.6
12. आश्व. श्रौ. 1.6.1
1३. पा. सू. 8.2.91/३610
14. पा. सू. 8.2.92/३611
15. काशिद्कोद्धृतैर्विभिन्नमतैरिदं स्पष्टं भवति यन्न विद्वांसोऽस्य सूत्रस्य (8.2.92 इत्यस्य) व्याख्यानेऽवधारणे च एकमतावलम्बिनो न सन्ति। विभिन्नश्रौतसूत्रग्रन्थेषु एतादृशानां वाक्यानां स्थितिरेवंप्रकारेण वर्तते— ''आ श्रावय' (वा. स. 19.24 का स ३1.10) तै सं. 1.6.11.1.2.३.4; आप श्रौ ३.16.17 ''आश्रावय यजमानं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसाय' (आप श्रौ 1.३.2३) ''आश्रावयो श्रावय श्रावयो माश्रावय'' (आप. श्रौ. 2.15.३) आश्रावितमत्याश्रावितम् (तै ब्रा. ३.7.11. आप श्रौ ३.11.2) ओ श्रावय मै सं. 1.4.11. 1.59.20 श ब्रा 1.5.15 1. 5.2.18 तै आ 7.8.1 तै उप 1.18.1 कौ श्रौ सूत्र ३.2३. आप श्रौ 2.15.३

अवशिष्टपदेषु मध्ये चतुर्णां याज्याया: पठने विनियोगो विधीयते। तद्यथा 'आ३श्रा३वय' इत्यध्वर्युणोक्ते सत्याग्नीध्र: 'अस्तु श्रौ३षड्' इति प्रत्याश्रावयति। तत:, 'अग्निं यज' इत्यादिना अध्वर्युर्होतारं सम्प्रेष्यति। तदनु होता तद्देवतासंबन्धिनीं याज्यां 'ये३यजामहे' इत्यागू:पुर:सरां प्लुतान्त्याक्षरां च पठित्वा वौ३षड' इति वषट्करोति।

उर्वरितस्य 'प्रेष्य' इति पदस्य पशुबन्धे प्रयोगो वर्तते। प्रयाजकाले आश्रावण-प्रत्याश्रावणानन्तरमध्वर्यर्होतारं प्रेष्यति 'समिद्‌भ्य: प्रे३ष्य' इत्यादि। अनन्तरं होता यथादेशं प्रजाजयाज्यां पठति।

सूत्रोक्तनियमानां याज्ञिकग्रन्थेषु कृतेन् तद्विषयकप्रतिपादनेन सह तुलना कर्तव्येत्युक्तं प्राक्। तथान्वेषणे कृते सत्यमेवमवलोक्यते। अत्रोदाहृतानां मन्त्राणां मध्ये याज्याप्रयोगे विनियुक्तस्य मन्त्रपञ्चकस्य मूलं यजुर्वेदसंहितासु निविष्टं दृश्यते। तथा च तैत्तिरीया: पठन्ति ''आश्रावयेति चतुरक्षरमस्तु, श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम् वषट्कार: एष वै प्रजापतिर्यज्ञमन्वायत्त:''[16] अयमोवांश: शाखान्तरेष्वपि स्वल्पभेदेनोपलभ्यते।[17]

अत्रैतदवश्यमवधारणीयं यद् यजु: संहितासु तथा च तत्तद्ब्राह्मणभागेष्वप्येषां पदानां प्लुतोच्चारणविषये किमपि विधानं न विद्यते; तस्मात् कल्पसूत्रान्तर्गतानि श्रौतसूत्राण्येव प्लुतिविषये प्रमाणभूतानि स्यु:।

इदानीं कल्पसूत्राणि अवलोकनीयानि। तत्रायं विषयोऽध्वर्युकाण्डे होतृकाण्डे च दृश्यते। अत्रैतदवलोकनीयं यद् बोधायनाद्याचार्यपादा एतेषां पदानां विनियोगं दर्शयन्ति, अपि च प्लुतिवर्जम्। तथा चापस्तम्ब:–

''ब्रह्मन् प्रवरायाश्रावयिष्यामीति ब्रह्माणमामन्त्रा श्रावयोश्रावय श्रावयोमाश्रावयेति वा श्रावयति। अस्तु श्रोषडित्याग्नीध्र:।''[18]

मानवीये तु प्रणववर्जं सर्वेषां प्रकृतपदानां प्लतेर्विधानमुपलभ्यते। तदेवम्–

''पशुपुरोडाशं यानि चान्वायतन्ते त्रिमात्राणि भवन्ति। ये यजामह आदिरेह्यावहेति चोश्रावयेत्यादितो द्वे। ब्रूहि-प्रेष्य-श्रौषड्-वोषट्सूपोत्तमम्। याज्यान्तश्च। तस्मिन् सन्ध्यक्षराण्यप्रगृह्याणि विवेकेन प्लवन्ते।[19]

एतेषां विनियोगो होतृकाण्डेऽपि आश्वलायनीये दर्शपूर्णमासप्रकरणे शाङ्ख्यायनीये परिभाषाखण्डे च विद्यते।

---

16. तै. सं. 1.6.11.1
17. द्र. मै. सं. 1.4.11; काठ.स. ३1.1३; गो. ब्रा. 1.३.10
18. आप.श्रौ. 2.14.३-4
19. मा. श्रौ. 5.1.1.111

[20]आगूर्याज्यादिरनुयाजवर्जम्।[21] ये यजामहे इत्यागूः। वषट्कारोऽप्यः सर्वत्र। तयोरादी प्लावयेत्[22] यं कामयेत ऋध्नुयादिति तस्योपरिष्टाद् येयजामहात् विभक्तिं दध्यात् पुरा वा वषट्कारात्[23] ये यजामहः प्लुतादिपुरस्ताद्याज्यानाम्।[24]

[25]'स्वरादिमृगान्तमोङ्कारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽवस्येत् तत् सन्ततम्।[26] उत्तमस्य च छन्दोमानस्योर्ध्वमादिव्यञ्जनात् स्थाने ओकारः प्लुतस्त्रिमात्रः शुद्धः मकारान्तो वा, तं प्रणव इत्याचक्षते।[27]

[28]याज्यान्तं च।[29] प्लुतेन याज्यान्तेन वषट्कारस्य सन्धानम्।[30]

[31]"प्रत्याश्रावयेदाग्नीध्रमुत्करदेशे तिष्ठन् स्फयमिध्मसंनहनानीत्यादाय दक्षिणामुख इति शाट्यायनकमस्तु श्रौषडित्यौकारं प्लावयन्।[32] देवता द्वितीयया विभक्त्यादेशमादेशमावहेत्यावाहयत्यादिं प्लावयन्।[33] आवहशब्दस्यादि प्लावयन् 'आवह देवान् होत्रायावहावह जातवेद, (इत्येतेषु त्रिषु प्लुतावसाने न स्तः नारा) प्लावयेदाकारमावाहनम्। औकारो वषट्कारे चतुर्मात्रः, षकाराच्चोत्तरोऽकारः। प्रकृत्या वोभौ। पूर्वे वा प्रकृत्या। प्रकृत्याकार इति जातूकर्ण्यः।[34]

प्रकृतबन्धस्य इदं फलितम्; (1) अस्य पदसङ्घस्य सर्वयज्ञानुगतत्वाद् यजुर्वेदे च प्राधान्येन निर्देशात् पाणिनिना स्वसूत्रेषु समावेशः कृतो भवेत्; (11) प्लुतोच्चारणविषये कल्पसूत्राणि प्रमाणीकृतानि आचार्येण। अत्र पाणिनिसूत्रस्य मानवीयस्य च शब्दसाम्यं विशिष्य लक्ष्यीकर्तव्यम्; (३) विमर्शोऽयं कल्पसूत्राणां पाणिनिसूत्राणां च उपरिनिर्दिष्टपाणिनिसूत्रैः सह कृतायां तुलनायां विमर्शोऽयं कदाचित् क्वचिच्च न्यूनांशेनापि पौर्वापर्यविनिश्चये सहायकरो भवेद् इत्यहं मन्ये।

---

20. पा. सू. 8.2.88
21. द्र. ऐ ब्रा 2.28 6 "अथो मनो वै यज्ञस्य मैत्रावरुणः। वाग् यज्ञस्य होता। मनसा वा इषिता वा वाग् वदति। यो ह्यन्यमना वाचं वदति असुर्या वै सा वागदेवजुष्टा तद्यदेवात्र। तद्यदेवात्र मैत्रावरुणो द्विरागुरते सैव होतुरागूः।।"
22. आश्व श्री. 1.4.5. 6
23. आप श्रौ. 5.28.9
24. शां. श्रौ. 1.2.2
25. पा.सू. 8.2.89
26. आश्व. श्रौ. 1.2.10
27. शां. श्रौ. 1.1.19-21
28. पा. सू. 8.2.90
29. आश्व. श्रौ. 1.5.8
30. शां.श्रौ 1.1.42
31. पा. सू. 8.2.91
32. आश्व. श्रौ 1.4.1३; द्र. 88 सूत्रोपरि टिप्पणम्
33. पा.सू. 1.३.6
34. शां. श्रौ; 1.2.1; 1.2.1३-17

अष्टाध्याय्याम् 'ये यज्ञकर्मणि'[35] 'अग्नीत्यप्रेषणे परस्य च'[36] इति सूत्रद्वयस्य यान्युदाहरणानि वृत्तिग्रन्थेषूपलभ्यन्ते तेषां मूलं तैत्तिरीयसंहितायामेव[37] मन्त्ररूपेण दृश्यते। सूत्रग्रन्थेष्वपि स्थितिर्दृश्यते समिद्भ्यः प्रेष्य[38] अग्नेयऽनुब्रूहि[39] उत्तरवर्त्ति पुराणेतिहासग्रन्थेष्वेतेषां वैदिकमन्त्राणां शब्दस्वरूपं भावरूपेण संग्रह्य प्रस्तुति कृता, सा वैदिकमन्त्राणामुपबृंहणमपि वक्तुं शक्यते। पुराणेतिहासग्रन्थेषु मन्त्राणा मुपस्थितिः श्लोकानुबद्धा अधोलिखितरूपा अस्ति

1. चतुरक्षरं परं चैव चतुरक्षरमेव च।
   द्व्यक्षरं च तथा पञ्चाक्षरं द्व्यक्षरमेव च।
   एतद् यज्ञस्वरूपं च।।[40]

2. चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु।।[41]

३. अपि च महाभारते

   इदमार्षं प्रमाणं च ये यजामह' इत्यपि। तस्माच्छीलं प्रथानेष्टं विदुर्ये तत्त्वदर्शिनः।[42]

अष्टाध्याय्यां प्लुतिविषये ये मन्त्रा विचिकित्सितास्तेषां यज्ञस्वरूपं स्कन्दपुराणकाले परिज्ञातं प्रचलितञ्चासीत्। महाभारते नारदीयपुराणे च मन्त्रैर्विष्णुः स्तुतः। तथा च महाभारते ब्राह्मणादिवर्णेषु जातिनिर्धारणविषये ये यजामहे' इति वैदिकं वचनं सर्वजनसाधारणतया स्वीकृत्य, जातौ संशये जाते, शीलमेव ब्राह्मणत्वे प्रधानेनेष्टमिति प्रकारान्तरेण मन्त्रव्याख्यानं कृतम्। इदमपि वेदानाम् उपबृंहणं कथयितुं शक्यते।

---

35. पा. सू. 8.2.880
36. पा. सू. 8.2.92
37. पा. सू 1.6.11
38. आप. श्रौ; 7.14.7; मा. श्रौ. 1.8.३.17); प्रेष्य (आ. श्रौ. 7.14.7 7.26.1३; म श्रौ. 1.8.३.17; 1.8.6.5); प्रेष्य कौ. श्रौ. 6.4.10.. श ब्रा. 4.5.2.9 श ब्रा 4.5.2.9 4.5.2.11 9.4.३.15; 9.5.1.40
39. श. ब्रा 2.2.३.21; 24. 2.5.2३.३1 इत्यादयः, आप श्रौ 2.19.6; इत्यादय मा श्रौ 1.३. 2.8.14
40. स्कन्द, धर्मारण्य. ३9.8-9
41. महा.शान्ति 47.4३ नारद. पूर्व. 19.३8 प्रथमविष्णुस्मृतिः (स्मृतिसन्दर्भः प्रथमभागः) श्लोकः ३4, पृ. ३92
42. महा. वन. 180.३३

# क्रुञ्च्धातोर्ञोपधत्वम्

डॉ. विष्णुकान्तपाण्डेयः

क्रुञ्च्धातु[1]: कौटिल्याल्पीभावयोरर्थयोर्वर्तते। भ्वादिगणपठितत्वात् शप्विकरणत्वाच्च क्रुञ्च्धातोः लट्लकारे क्रुञ्चति क्रुञ्चतः क्रुञ्चन्ति। क्रुञ्चसि क्रुञ्चथः क्रुञ्चथ। क्रुञ्चामि क्रुञ्चावः क्रुञ्चमः इति रूपाणि सिद्धानि भवन्ति।

अयं च क्रुञ्च्धातुः मोपधो ञोपधो वेति? जिज्ञासाशान्त्यर्थ। मुच्यते यत् क्रुञ्च्धातोर्ञोपधत्वमेवेति सिद्धान्तं वदन्ति मातरः पुष्पादीक्षित महोदयाः तेन 'क्रुञ्च्यात् इत्यत्र अनुस्वारस्य"[2] "परसवर्णस्य"[3] "चासिद्धत्वाभावात्" अनिदितां हल उपधायाः क्ङिति"[4] इतिं सूत्रेण नलोपौ न भवति। अन्यथा अनिदितां हल इति सूत्रस्य सपादसप्तध्यायिस्थत्वात् अनुस्वारपरसवर्णयोः त्रिपादिस्थत्वादसिद्धत्वाच्च नलोपेन 'क्रुच्यात् इत्यसाधुरूपस्य प्रसक्तिः स्यात्। तन्माभूदित्येवमर्थं क्रुञ्च्धातोः स्वाभाविकञ्कारोपधत्वमेवाङ्गीक्रियते। न त्वनुस्वारपरसवर्णसम्पन्नञकारोपधत्वमिति सिद्धान्तः।

ननु नकारजावनुस्वारपञ्चमौ झलि धातुषु।[5] इत्यभियुक्तोक्तेः क्रुञ्च्धातोर्नोपधत्वमेव भवतु। तथा च अनिदितां हल उपधाया क्ङिति। इति सूत्रेण अनुस्वारपरसवर्णयोरसिद्धत्वान्नलोपेन क्रुऽच्धातोः आशि०लिङि क्रुच्यात् इति रूपं साधु एवेति चेन्न भाष्यविरुद्धत्वात् शास्त्रकारैरनुक्तत्वाच्चेति।

अत्र महाभाष्यकारः-महाभाष्यकारेण शेषावतारभूतेन भगवता पतञ्जलिना[6] क्रुर्ञ्चधातोर्ञोपधत्व-मेवाङ्गीकृतम्। तथा हि-क्रुञ्चा इत्यत्र चोः कुर्झलीति कुत्वं प्राप्नोति 'सडीतिवचनान्न भवति। एतदपि नास्ति प्रयोजनं, निपात नादेतात्सिद्धम्। किं निपातनम्? ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चामिति।[7]

अयं भाव-परेश्च घाङ्कयोः[8] इति सूत्रे महाभाष्यकारेण पतञ्जलिना साङिलत्वसलोप-संयोगादिलोपकुत्वदीर्घत्वानि इति वार्तिकमुल्लिखितम्। अर्थात् सङि परे गिरौ गिर इत्यत्र अचि

---

1. क्रुञ्च 186 कौटिल्याल्पीभावयोः भ्वादिगणपठितः परस्मैपदी से. धारतुरयम्।
2. नश्चापदान्तस्य झलि (पा. सूत्र. 4-3-24
3. अनुस्वारस्य ययि परसवर्णः (पा. सू. 8-4-58
4. पा. सू. 6-4-24
5. भूवादयो धातवः (41.0सू. 1-3-1) इति सूत्रस्य शब्दरत्नादुद्धृतोऽयं श्लोकः।
6. परेश्च धाङ्कयो (पा सू. 8-2-22) इति सूत्रस्य भाष्ये।
7. पा. सू. 8-22 इति सूत्रस्य भाष्ये।
8. पा. सू. 8-22

विभाषा[9] इति लत्वं पयो धावतीत्यत्र धि च[10] इति सलोपः द्विटरामित्यत्र[11] ह्रस्वादङ्गादि[12] ति सलोपः दृषत्स्थानमित्यत्र झलो झलि[13] "ति सलोपः काष्ठशक्स्थातेत्यत्र स्को संयोगाद्योरन्ते च[14]। इति, ककारलोपः क्रुञ्चा इत्यत्र चोः कुः। झलीति कुत्वं च प्राप्नोति। तेषां प्रतिषेधो वक्तव्यः। सङि परे लत्वस्य, सलोपस्य, संयोगादिलोपस्य, धुर्य इत्यत्र 'हलि च[15]' इति दीर्घत्वं प्राप्नोति तस्य च प्रतिषेधो वक्तव्यः। "सडीति[16] सनः सकारादारभ्य आ महिडो ङकारेण प्रत्याहारः"। मुस्ति ञ्किद्भ्यः सन् इति सनः सकारादारभ्य तिप्तस्झि सिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिमहिङ्[17]। इति महिङो ङकारेण प्रत्याहारः। तेन धातुविहितसर्वप्रत्यय सङ्ग्रहः।[18]

कौटिल्याल्पीभावार्थक क्रुञ्च् धातोः[19] ऋत्विग्दधृक्स्रग्दिगुणिगञ्चुपुजिक्रञ्चां चे इति सूत्रेण क्विन्प्रत्यये सर्वापहारिलोप प्रत्ययलक्षणेन कृदन्तत्वात् कृत्तद्धितसमासाश्च[20] इति सूत्रेण प्रातिपदिकत्वात तृतीयैकवचनविवक्षायां टाप्रत्ययेऽनुबन्धलोपे क्रुञ्चा इति पदं निष्पन्नं भवति। अत्र महाभाष्य कारेण ञकारस्य स्थाने चकारे परे चोः कुः[21] इति सूत्रेण (चकाररूपझलि परे) कुत्वं प्राप्नोति। सङि परे कुत्वं न भवतीत्यर्थकेन सङि कुत्वं न इति वार्तिकेन निषेधे कृते क्रुञ्चा इत्यत्र कुत्वं न भवतीत्युतम्। सङ प्रत्याहारे क्विनप्रत्ययोऽपि आगच्छति अतः साङित्यनेन कुञ्चा इत्यत्र क्विन्प्रत्ययस्य ग्रहणं भवति।

एतदनन्तरं महाभाष्यकारेणोक्तं यत् सड़ि कुत्वं न इति वार्तिकाभावेऽपि क्रुञ्चा इत्यत्र कुत्वं न भविष्यति। यतो हि प्रमाण भूतेन आचार्येण भगवता पाणिनिना 'ऋत्विगदधृकस्रग्दिगुष्णिगञ्चुयुजि क्रुञ्चां च" इति सूत्रस्थे कुञ्चामित्यत्र कुत्वं न कृतम्। अतो निपातनात् क्रुञ्चा इत्यत्र कुत्वं न भविष्यति। तदर्थं सङि क्रञ्चामित्यत्र कुत्वं नकृतम्। अतोनिपातनात् "क्रुञ्चा" इत्यत्र कुत्वं न भविष्यति। तदर्थं 'साङि' कुत्वं न इति वार्तिकं न कर्तव्यम्। अत एव महाभाष्यकारेण उक्तं

---

9. पा. सू. 8-22
10. पा. सू. 8-22
11. द्वौ वारौ द्विः इत्यत्र द्वित्रिचतुर्भ्य सुच (पा. सू. 8-22 5-4-18) इति सूत्रेण सुच प्रत्येय वारद्वयस्य परिपूर्णत्वाद प्रकर्षेऽर्थे तरप्रत्यये तदन्नात् किमेत्तिङत्वययधादाम्वद्रव्यप्रकर्षे (पा. सू. 8-22 5-4-11) इति सूत्रेण आम्प्रत्यये सति द्विष्टरामिति पदं निष्पन्नं भवति।
12. पा. सू. 8-2-27
13. पा. सू. 8-26
14. पा. सू. 8-2-29
15. पा. सू. 8-2-30
16. पा. सू. 8-2-77
17. परेश्च घाङ्क्योः इति सूत्रस्य प्रदीप।
18. पा. सू. 8-1-5
19. परेश्च घाङ्क्योः (पा. सू. 8-2-22) इति सूत्रस्य उद्घोते।
20. पा. सू. 8-2-59
21. पा. सू. 8-2-46

कुत्वमपि[22] नास्ति प्रयोजनम् निपातनादेतत्सिद्धम्। किं निपातनम्? ऋत्विग्दधृक्स्रग्दिगुष्णिगच्चुयुजि-क्रुञ्चामितीति। इत्थं सुस्पष्टं यन्महाभाष्यकारः क्रुञ्च्धातोर्ञोपधत्वमेवेच्छान्ति।

अत्र काशिकाकारः–काशिकाकारस्तु क्रुञ्च्धातो नोंपधत्वमेवाङ्गीकरोति। तथा हि **"ऋत्विग्दधृक"**[23] इति सूत्रस्य काशिकायां क्रुङ्[24] क्रुञ्चौ क्रुञ्चः नलोपः कस्मान्न भवति? निपातनसाहचर्यात इत्युक्तम्।

अय भावः–क्रुञ्च् धातोः ऋटार्त्वग्धृ इति सूत्रेण्णा क्विन् प्रत्यये सर्वा पहारिलौप प्रत्ययलोपे प्रत्ययलक्षणम्[25] इति सूत्रेण प्रत्ययलक्षणेन कृदन्तात्वात् प्रातिपादिकत्वाच्च प्रथमविभक्तौ स्वादिकार्ये कृते क्रुङ् क्रुञ्चौ क्रुञ्चः इति रूपाणि भवन्ति। अत्र क्विनः कित्वात् प्रत्ययलक्षणेन तत्परे। अनिदितां हल उपधायाः क्ङिति[26] इति सूत्रेण नलोपः कस्यान्न भवतीति शङ्का काशिका कारेणेद्भाविता। एतेन काशिकाकारस्य कुञ्चधातो नोंपधत्वं भवतीति सुस्पष्टमेव। अर्थात् क्रुञ्च्धातोर्नोपधत्वस्वीकारदेव काशिकाकारस्येयं शङ्का समुचिता स्यात् अन्यथा स्वाभाविकञकारोपधत्वस्वीकारे नलोपप्राप्तेरभावान्नलोपः कस्मान्न भवतीत्यस्यासङ्गत्यापत्तिः।

पदमञ्जरीकारो हरदत्तः कुञ्च क्रुञ्च् कौटिल्याल्पीभावयोः इति नोपधावेतौ धातू[27] इति ऋत्वि ग्दधृक् इति सूत्रस्य पदमञ्जर्य्यां लिखितवान्।

अत्र भट्टोजिदीक्षितः–भट्टोजिदीक्षितोहि क्रुञ्चधातोर्नोपधत्वमङ्गी करोति। अत एव सिद्धान्तकौमुद्यां तेन लिखितम् क्रुञ्च्[28] कौटिल्पीभावयोः। अस्य ऋत्विग् आदिना नलोपाभावोऽपि निपात्यते इति।

अयं भावः–क्रञ्च्धातोर्नोपधत्वेनैव अनिदितां हल उपधाया क्ङिति इति सूत्रेण नलोपप्राप्तौ निपा तनात् तदभावो बोध्यते। क्रुञ्च् इत्यत्र ञकारवणेऽपि न लोप विधायकसूत्रहष्ट्या पर त्रिपादीस्थत्वेन अनुस्वारपरसवर्णस्यासिद्धत्वेन नलोपप्राप्तिर्भवत्येवेत्याशयः। अन्यथा ञोपधत्वात् नलोप प्राप्त्यभावाच्च तदसङ्गति सुस्पष्टैव। एतेन भट्टोजिदीक्षितः क्रुञ्च्धातो नोंपधत्वमेवाङ्गीरोति।

अत्र बालमनोरमाकारः–बालमनोरमाकारः श्रीवासुदेवदीक्षितमहोदयस्तु क्रुञ्च्धातोर्ञोपधत्वमेव स्वीकरोति। तथा हि वस्तुतस्तु[29] स्वाभाविकञोपधस्यैव धातुपाठे निर्देशाद् नलोपस्यात्र प्रसक्तिरेव नास्ति। अत एव परेश्च घाङ्कयोः[30] इति सूत्रे भाष्ये क्रुञ्चा इत्यत्र चकारे परे "चोकु"[31] इतिकुत्वमाशङ्क्य

22. पा. सू. 8-2-30
23. परेश्च घाङ्कयोः पा. सू. 8-2-22 इतिसूत्रे समागतं वार्तिकम्।
24. परेश्च घाङ्कयोः पा. सू. 8-2-22 इति सत्रस्थं भाष्यम्
25. पा. सू. 8-2-59
26. काशिकायाम् पा. सू. 8-2-59 इति सूत्रस्य
27. पा. सू. 8-1-62
28. पा. सू. 8-4-24
29. ऋत्विक् दधृक्; पा. सू. 8-2-59 इति सूत्रस्य पदमञ्जर्य्याम्।
30. वैयाकरणसिद्धान्कौमुद्या नाञ्चेः पूजायाम् सि. कौ. सं 424 इति सूत्रस्य व्याख्यावसरे।
31. हलन्तपुंलिङ्गकरणे क्रुडे कुञ्चौ कुञ्चः' इति रूपसिद्धि प्रसङ्गे बालमनोरमायाम्।

त्रछत्विगित्यादि सूत्रे क्रुञ्चेति निपातनात् कुत्वं नेत्युक्तं संगच्छते। यदि तु नस्यानुस्वारपरसवर्णाभ्यां ञकारो निर्दिशयेत, तर्हि तस्य चोकुः इति कुत्वाप्रसक्तिरेव नास्तीति तदसङ्गतिः स्यात् कुत्वे कर्तव्ये परसवर्णस्यासिद्धत्वादित्यास्तां तावत्।। भाष्यप्रामाण्यात्[32] क्रुञ्चधातोञ्चपधत्वस्वीकारे नलोप प्राप्तिरेव नेति भावः।

अयं भावः–बालमनोरमाकारस्य मते क्रुञ्च्धातुस्तु स्वाभाविकञकारोपध एव। न त्वनुस्वारपर सर्वसम्पन्नञकारोपध इति। अतस्तस्याशीर्लिङि अनिदितामिति नलोपस्य न प्रसक्तिस्तेन क्रुञ्च्यादिति रूपं सिद्धं भवति।

अत्र नागेशभटः–नागेशभट्टोऽपि क्रुञ्च् धातोर्ञोपधत्वमङ्गीकरोति। अत एव बालमनोरमायामुक्तम्[33] ञकारहितवाठस्तु प्रामादिक इति शब्देन्दुशेखरे स्थितमिति। ञोपधत्वात् नलोपो न भवतीति भावः। लघुशब्देन्दुशेखरे नागेशभट्टः क्रुङ्ञ्चौ क्रुञ्चः'' इत्यत्र नलोपाभावोऽपि[34] निपात्यते इति सिद्धान्तकौमुद्याः प्रतीकमादायोक्तवान् ''नलोपाभाव[35] इति। ञोपधत्वबोधनद्वारेत्यर्थः। स्पष्टञ्चेदं परेश्च घेति सूत्रे भाष्य इति। ञोपधत्वेन स्वाभाविकञकारोपधत्वेन उपधायां नकाराभावान्नलोपो न भवतीत्याशयः।

तथा च नागेशभट्टेनोद्योतेऽपि क्रुञ्च्धातो ञोपधत्वं प्रतिपादितम्। तथा हि–महाभाष्यकारेण क्रुञ्चेत्यत्र चोः कु झलीति कुत्वं प्राप्नोति। सङीति वचनान्न भवतीति उक्तम्। तत्र क्रुञ्चेति प्रतीकमादाय नन्वत्र[36] अनुस्वारस्य परसवर्णे तस्यासिद्धत्वात् ञकाराभावेन कस्य कुत्वमिति चेन्न, औपदेशिकञोपधत्वात्। अत एव क्रुञ्च्यादित्यादौ ञोश्रवणं नोपधत्वे हि नलोपः स्यादिति भावः। न च ञकारोच्चारणसामर्थ्यादेव कुत्वभावे निपातनपर्यन्तं धावनं व्यर्थं क्रुङ् इत्यादावपि कुत्वानापत्तेः। निपातनेत तु चयोगे कुत्वा भावबोधनान्न दोष इति दिक्। परे तु अनेकज्ञापकनिपातानाश्रयणापेक्षया सङीत्येव लघु इति सङीतिकार्यमेव प्रत्याख्यानं त्वेकदेशिन इत्याहुरिति नागेशेनोद्योते विलिखितम्।

अयं भावः–उद्योते औपदेशिकञोपधत्वात्। अत एव क्रुञ्च्यादित्यादौ ञश्रवणं नोपधत्वे हि नलोपः स्यादिति भावः इति कथनेन सुस्पष्टमेव प्रतीयते यत् नागेशभट्टः क्रुञ्च्धातो र्भोपधत्वं स्वीकरोति। यदा सङीति वार्तिकस्य प्रत्ययाख्यानं नास्तीति नागेशमतेऽपि क्रुञ्चेत्यत्र कुत्वं कस्मान्न भवतीति शङ्काऽस्त्येव। यदर्थं वार्तिकं स्वीकर्तव्यम्। कुत्वशङ्का ओपधत्वेनैव सम्भवति। अतः क्रत्चधातो र्ञोधपधत्वं नागेशस्य मते भवत्येव।

नन्वेनं केचनं आचार्याः क्रुञ्च् धातो नोपधत्व स्वीकुर्वनित। अन्ये तु ओपधत्वमिति। तत्र काशिकाकारदत्तः पदमञ्जरीकारो हरतः श्रीमद्भट्टोजीदीक्षितमहोदयाश्च क्रुञ्चधातो ञोपधत्वमङ्गीकुर्वन्ति। बाल मनोरमाकारा नागेशभट्टमहोदयाश्च क्रुञ्च्धातो र्ञोप धत्वं मन्यन्ते। तत्रास्माभिः क्रुञ्चधातो

32. पा. सू. 8-2-22
33. पा. सू. 8-2-30
34. परेश्च घाङ्क्यो इति सूत्रस्थ भाष्यप्रामाण्यादितिभावः।
35. क्रुञ्चधातोः (186) आशिर्लिङि क्रुञ्च्यादिति रूपं भवतीति प्रतीकमा दयोक्तं बालमनोरमायाम् (धातु सं 186)
36. क्रुङ कुञ्चौ कुञ्चः इत्यस्य सिद्धिप्रसङ्गे हलन्तपुंल्लिङप्रकरणे सिद्धानत कौमुद्याम

ञोपधत्वं सवीकर्तव्यं नोपधत्वं वेति जिज्ञासायां क्रुञ्च् धातोञोपधत्वमेव वक्तव्ये महाभाष्याकारैस्तथा-स्वीकारात्।[37]

तथा हि-महाभाष्यकारेण पतञ्जलिना क्रुञ्च्धातोर्ञोपधत्वं स्वीकृतम्। "परेश्च[38] घाङ्कयोः इति सूत्रस्य भाष्ये सङि कुत्वं[39] न इति वार्तिक प्रत्याख्यानाय महाभाष्यकारेण क्रुञ्चा इत्यत्र कुत्वं कस्मान्न भवतीति शङ्कामुपस्थाप्य सङीति वार्तिकेन समाहितम्। अर्थात् सङि कुत्वं न इति वार्त्तिकेन निषेधात् कुत्वं न भवतीति समाहितम्। एतदनन्तरं वार्तिकस्य प्रत्याख्यानायोक्तचत् [40]ऋत्विग्दधृक्स्राग्दि-गुष्णिगञ्चुयुजिक्रुञ्चां ञ इति निपातनात् कुत्वं न भवति। सूत्रकारेण क्रुञ्चामित्यत्र कुत्वं न कृतम्। अस्मादेव पाणिनेः कुत्वाभाव[41] प्रयोगादेव कुत्वं न भविष्यति। तदर्थं वार्तिकं न कर्तव्यं भवतीति भावः। इत्थं महाभाष्यकारस्य 'क्रुञ्चा' इत्यत्र कारस्य स्थाने चकाररूप झलि परे चोकुः[42] इति सूत्रेण कुत्वशङ्काविधानात् क्रुञ्च धातो ञोपधत्वमेव स्फुटभवति। अन्यथा क्रुञ्चधातोर्नोपधत्वेअनुस्वारस्य परस्वर्णस्य[43] च त्रिपादिस्थत्वात् असिद्धत्वेन क्रुञ्च्धातौ ञकाराभावात् कुत्वशङ्कापरकभाष्योच्छेदापत्तिः स्यात्। अतः क्रुञ्च्धातो ञोपधत्वमेवाङ्गीकर्तव्यम्। तेन आशीर्लिङि क्रुञ्च्धातोः क्रुञ्च्यादित्यत्र ञश्रवणं भवत्येव। ञकाररहित पाठः[44] प्रामादिक इतिभावः।

न च काशिकाकारादयो ये नोपधत्वं स्वीकुर्वन्ति, तेषां मते अनुस्वारस्य परसवर्णस्प च त्रिपादिस्थत्वेनासिद्धत्वात् अनिदितां[45] हल उपधायाः क्ङ्ति इति सूत्रेण नलोपे कृते क्रुञ्च्या दिति ञकाररहितमपि रूपं साधिवति वाच्यम्, कुत्व शङ्कारपरकभाप्योच्छेदापत्तेः। नोपधत्वे[46] कुत्वशङ्कापरक भाष्यासङ्गति स्यादिति भावः। एतेन आचार्यद्वयप्रामाण्यात् क्रुञ्च्यात् क्रुच्यात् इति रूपद्वयमपि साधित्यपास्तम्। ननुकुचि इतीदित्पाठेनापि क्रुञ्च्यादिति रूपं सिद्धं क्रुञ्चेति पाठो व्यर्थः स्यादतोऽयं न ञोपधोऽपितु नोपध इति चेन्न परेश्च घाङ्कयोः इति भाष्यप्रामाण्यात् क्रुञ्च्धातो ञोपधत्वस्वीकारात्।

अयं भावः-क्रुचि इति पाठे इदितो नुम् धातोः इति सूत्रेण नुमागमे क्रुञ्चधातोः आशीलिङि क्रुञ्च्यादिति रूपं भविष्यति। अनिदितां हल उपधायाः क्ङिति इति सूत्रेण इदित्त्वादेव नलोपो न भविष्यति क्रुञ्च इति पाठसामर्थ्येन नलोपार्थं नोपध एवायं धातुरिविक्तुं न शक्यते भाष्यपामाण्ये क्रुञ्च्धातो ञोपधत्वात्। अत एवोच्यते यथोत्तरं मुनीनां[47] प्रामाण्यमिति। प्रामाणभूतेषु त्रिष्वपि आचार्येषु महाभाष्यकारः सर्वप्रामाणिक आचार्यस्तंस्यैव वचनमस्माकं प्रमाणम्। तेन क्रुञ्च्धातोर्ञोपधत्वमेव अस्माभिरङ्गीकर्तव्यमिति दिक्।

37. लघुशब्देन्दुशेखरस्य हलन्त पुंल्लिङ्ग प्रकरणेनागेशेनोक्तम्।
38. परेश्च घाङ्कयो 8-2-22 इति सूत्रस्योद्योते।
39. परेश्च घाङ्कयोरिति सूत्रे ओपधत्वरस्वीकारात्।
40. पा. सू. 8-2-22
41. परेश्च घाङ्कयोरिति सूत्रस्य भाष्ये समागतं वार्तिकम्।
42. पा. सू. 8-2-59
43. ऋत्विग्दघृक्स्राग्निगुष्णिज्युजिक्रुञ्चां च (पा. सू. 8-2-59) इति सूत्रस्थ क्रुञ्चामित्यत्र कुत्वाभाव प्रयोगात्।
44. पा. सू. 8-2-30
45. नश्चापदान्तस्य झलि (पा. सू. 8-3-24) इति सूत्रेण विहितस्या नुस्वारस्य
46. अनुस्वारस्य यापि परस वर्ण (पा. सू. 8-4-58) इति सूत्रेण विहितस्य परसवर्णस्य।
47. क्रुच्यादिति रूपम्।

# कुण्डलीमेलापकेऽष्टकूटानां वैज्ञानिकता

डॉ. बिहारीलालशर्मा

दाम्पत्यजीवनस्य सातत्येन समृद्धिः, वंशलतिकायाः नैरन्तर्येणाभिवृद्धिः नैरूज्यावाप्तिपूर्वकमुत्तम-सन्ततेः प्राप्तिः, भौतिकोन्नतिपूर्वकं मानसोल्लासपूरितामन्दानन्दोपलब्धिः येन विधिना सम्भवति ज्योतिषे सोऽयं विधिः मेलापकत्वेनाभिज्ञायते। वरकन्ययोः पारस्परिक प्रीति-प्रतीति-परिपूरित-पावन-सम्बन्ध-संरचना-पूर्वकमुभयोः विवाहानन्तरं वैवाहिकजीवने पारस्परिकसौहार्दपूर्ण-वातावरणाविर्भावस्यातीवावश्यकता भवति। तत्कृते मेलापकस्य ये सन्ति नियमाः सिद्धान्ताः विधयश्च तेषामनुकरणमनुसरणञ्चातीवावश्यकम्। परिणयेन जीवनस्य ऋतुचक्रे सुरभितमाधुर्यस्य सूत्रपातो भवति। धर्मधराधारित-कामस्य प्रत्यूषस्वप्नानां मूर्तरूपोऽयं विवाहसंस्कारः। येन मानवजीवनं गृहस्थाश्रमस्य विविध-गीत-संगीतमाधुर्येण स्नेहसुपूरितेन्द्रधनुषवर्णैः चित्र-विचित्र-चित्रितमपि सुखमनुभवति।

वरकन्ययोः शक्तेः सौन्दर्यस्य यो हि अहंभावः तस्य सर्वथा तिरोभाव एव वर-कन्ययोः दाम्पत्यसुखाधारः। विवाहो जीवनस्य न केवलं काचन सामान्या काऽपि घटना वर्तते, अपितु पारस्परिक-स्नेहार्णवे अन्योऽन्याश्रयसम्बन्धत्वात् वैदिकरीत्या सम्पादितोऽन्यतमः कश्चन विशिष्टः संस्कारः वर्तते।

वस्तुतः परिणयः पारस्परिकस्नेहस्य एतादृशः भावसिन्धुः वर्तते यत्राऽभावेऽपि स्वभावः समभावोभूत्वा सुख-दुखयोः हर्ष-विषादयोः उत्कर्षाऽपकर्षयोश्च चंचल-चटुल-चपलतरंगेभ्यः दाम्पत्यजीवनं वाञ्छितावाञ्छिताऽप्रत्याशितोन्मादजन्यामन्दानन्देनाऽपूर्यते। एतदर्थं दाम्पत्यजीवने जायमानानां सम्भावित-सर्वविधारिष्टजन्यदुर्घटनानां निवृत्यर्थं युक्तियुक्तं मेलापकमतीवानिवार्यम्। सुखददाम्पत्यकुञ्ज-निकुञ्ज-समृद्धिसुधयाऽप्लावित-वंशलतिकायाः नैरन्तर्येण विकासः, प्रीति-प्रतीति-परिपूरित-पावन-सम्बन्धसंरचनायाः शाश्वतं सत्यं सशक्तञ्च सेतुः परिणय-पथारोहणानुगमनानुसिंचनमेवाऽत्र नास्ति कोऽपि सन्देहावसरः। यतोहि सर्वेषामपि सचेतसां चेतसि विवाहेनान्तरंगानुरागस्य सूत्रपातो भवति। परिणयः जीवने परिवर्तनस्य नूतनानन्दस्यारम्भबिन्दुरस्ति। विवाहे उत्पत्स्यमाणानां विविध-बाधानां परिशमनपूर्वकं परिज्ञानं मेलापकविचारप्रक्रियायामतीवावश्यकम्। वर-कन्ययोः जन्माङ्गमेलापकस्य शास्त्रोक्त-प्रविधेः ज्ञानाभावत्वात् प्रायशः मेलापकानन्तरमपि दाम्पत्यजीवने विकृतिरुत्पद्यते। वस्तुतः मेलापकस्य ये खल्वाधारभूतनियमाः सिद्धान्ताः वा सन्ति तेषामनभिज्ञता अथ च तेषामनुपालने शैथिल्यमेव तत्र पारिवारिक-विघटनस्य कारणं भवति।

**मेलापकभेदाः**

**मेलापकः सामान्येन त्रिविधः भवति।**

1. नक्षत्रमेलापकः।
2. ग्रहमेलापकः।
3. भावमेलापकश्चेति।

1. **नक्षत्रमेलापकः**-नक्षत्रमेलापके मुख्यत्वेन अष्टकूटमाध्यमेन वरकन्ययोः समग्रस्यापि प्रकृतेः अभिरूचेश्च साम्यं विचार्यते।

2. **ग्रहमेलापकः**-ग्रहमेलापके भौम-शनि-सूर्य-राहु-केत्वादीनां पापग्रहाणां दृष्टि-युति-स्थिति-प्रभाववशात् दोषविचारः अथ च दोषशमनपूर्वकं वरवध्वोः पारस्परिकपूरकत्वभावस्य विश्लेषणं विशेषेण क्रियते।

3. **भावमेलापकः**-भावमेलापकमाध्यमेन दाम्पत्यजीवनस्य सात्विकसुखस्य ज्ञानं भवति। यथा वरस्य लग्नेश-राशिः कन्यायाः जन्मराशिः स्यात् उत्वा वरस्य सप्तम-भावस्थ-राशि कन्यायाः लग्नराशिः भवेत् उत्वा वरस्य सप्तमेशराशिः कन्यायाः लग्नरशिः भवेदित्यादि तन्वादिद्वादशभावानां विश्लेषणपूर्वकं परस्परपूरकत्वभाव-विषयविमर्शः विस्तरेण भावमेलापकेन क्रियते।

**नक्षत्र मेलापकः**

नक्षत्र मेलापके निम्नांकिता अष्टौबिन्दवः विचार्यन्ते-

1. वर्णः
2. वश्यम्
3. तारा
4. योनिः
5. ग्रहमैत्रम्
6. गणमैत्रम्
7. भकूटम्
8. नाडी चेति

वर्णादयश्चाष्टौकूटाः उत्तरोत्तर-गुणाधिकाः भवन्ति। तत्र विंशतिकूटानां दशकूटानां वा तत्तद्देशविशेष-प्रसिद्धत्वात्तानि विहाय सर्वदेशप्रसिद्धानि अष्टकूटानि सलक्षणानि अत्रोपस्थाप्यन्ते-

**वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम्।[1]**
**गणमैत्रं भकूटञ्चनाडी चैते गुणाधिकाः॥**

एते राशिकूटभेदाः वर्णादिमैत्र्यां सत्यां एकादिगुणाधिकास्स्युः।

**कूटभेदेन गुणभेदाः-** यथा वर्णमैत्र्यामेको गुणः, वश्ये द्वौ गुणौ, तारायां त्रयोगुणाः योनिमैत्र्यां चत्वारः, ग्रहमैत्र्यां पञ्च, गणमैत्र्यां षट्, सद्भकूटे सप्त, नाडीभेदेऽष्टाविति। एते न केवलं गुणाधिकाः अपितु स्त्रीपुंसयोर्घटनेऽपि यथोत्तरं बलिनः सन्ति।[2]

### वर्णकूटम्

समाजे यथा चत्वारः वर्णाः प्रसिद्धाः तथैव राशिष्वपि ब्राह्मण-क्षत्रिय-वैश्य-शूद्र-संज्ञकाः चत्वारः वर्णाः भवन्ति। तत्रोच्चवर्णे यथा उत्कृष्टतायाः भावः भवति तथैवाऽत्र राशिष्वपि भवति।

**वर्णो वश्यं तारा योनिग्रहगणभकूटनाडिकाश्चेति।**
**ज्ञेयायथोत्तरं ते बलिनः स्त्रीपुंसयोर्घटने॥**

कस्मिंश्चित्क्षत्रियवर्णमनुष्योपरि यदि कश्चित् शूद्रवर्णजनः स्वप्रभावेन प्रभावयितुं यतते तर्हि कथमपि सः शूद्रवर्णः साफल्यं नाधिगच्छति। तत्र क्षत्रियवर्णमनुष्यः शूद्रवर्ण-मनुजं स्वबलविक्रमेण सहसा दमयति।

एवमेव यदि कन्या विप्र-क्षत्रियवर्णयोः स्यात् तथा च शूद्रवर्णः वरः भवेत् तदा सा कन्या उच्चवर्णत्वात् सदा-सर्वदा गृहस्थजीवने स्वकीयाधिपत्यं स्थापयिष्यति, येन उभयोर्मध्ये अपेक्षित-तादात्म्याभावत्वात् गृहस्थजीवनं सौहार्दपूर्णं न भविष्यति।

अस्याः समस्यायाः निराकरणार्थं वर्ण-कूटस्य विचारो विधीयते। अत्र एतदपि सम्यगवधेयं यदत्रवर्णितानां वर्णानां सम्बन्धः राशिभिः सहैव वर्तते केवलम्। अस्मिन् प्रसंगे यत्र-कुत्रापि वर्णानां चर्चाविहिता तत्र केवलं राशीनां वर्ण चर्चैव। अत्र राशीनां या वर्णव्यवस्था वर्तते तस्याः व्यवस्थायाः वैदिकवर्णव्यवस्थया सह नास्ति कोऽपि सम्बन्धः।

---

1. मुहूर्तचिन्तामणिः विवाहप्रकरणम्-श्लो0 सं0 21
2. मुहूर्तचिन्तामणिः विवाहप्रकरणम्- पीयूषधाराटीका

तत्र-कर्क-मीन-वृश्चिक राशयो द्विजाः, मेषसिंहधनुराशयो क्षत्रियाः, वृषकन्यामकराः वैश्या मिथुनतुलाकुम्भाश्चशूद्राः।[3]

मेलापके वधू-वरराश्योः वर्णौ ज्ञात्वा वरस्य वर्णतो ब्राह्मणादिकाद्वधूः ज्येष्ठवर्णा विद्वद्भिः न शस्यते किन्तु तत्समा हीना वा शस्यते। वर्णाधिकवरे अत्रैको गुणः, वर्णहीने वरे तु गुणाभावः।

वश्यकूटम्-

वधूवरयोः पारस्परिकं वश्यावश्यत्वविचारः वश्यकूटेनैव क्रियते। वश्यकूटेनैवं विचार्यते यत् वधूवरयोः पारस्परिकं वश्यावश्यत्वं कीदृशं भविष्यति। अत्र वरस्य कन्यां प्रति वश्यत्वं व्यावहारिकदृष्ट्या आवश्यकं भवति। शास्त्रैरेवं निर्दिष्टं यत-

**पिता रक्षति कौमार्ये, भर्ता रक्षति यौवने।**

**पुत्रोरक्षतिवृद्धत्वे न स्त्री स्वातन्त्र्यमर्हति॥**

यतोहि स्त्री कोमल-कान्त-स्नेहिलभावनानां प्रतिमूर्तिः भवति। अनर्थ-निवृत्तये गृहस्थार्थप्रतिपत्तये दाम्पत्य-सुखसम्वर्धनाय च वश्यकूटस्य विचारः करणीयः। वश्यकूटविचार-प्रसंगे आचार्येण रामदैवज्ञेनोक्तम्-

**हित्वा मृगेन्द्रं नरराशिवश्याः सर्वे तथैषां जलजाश्च भक्ष्याः।**
**सर्वेऽपि सिंहस्य वशे विनालिं ज्ञेयं नराणां व्यवहारतोऽन्यत्॥[4]**

वश्यकूटविचाराय राशयः द्विपद-चतुष्पद-जलचरकीटसंज्ञया समुपदिष्टाः। मिथुन-कन्या-तुलानरराशयः, कर्क-मकर-कुम्भ मीनाः जलचर-राशयः, मेष-वृषौ चतुष्पद राशी, वृश्चिकः कीटराशिः।

तत्र हि मेषादयः सर्वे राशयः सिंहं विना नरराशि वश्याःभवन्ति, जलचराश्च भक्ष्याः तेन तेऽपि वश्याःभवन्ति। वृश्चिकं विना मेषादयः सर्वेऽपि राशय सिंहराशिवश्याः चतुष्पदानां जलचराणां, चतुष्पदजलचराणां वा पारस्परिकं वश्यावश्यत्वं मुनष्याणां व्यवहारतो ज्ञेयम्।

अत्रगुणविचारः-

---

3. झषालिकर्कटाः विप्रास्तदूधर्वाः क्षत्रियादयः।
पुंवर्णराशौ स्त्रीराशौ समे हीने तथा शुभम्॥
वर्णज्येष्ठा तु या नारी वर्णहीनस्तु यः पुमान्।
विवाहं यदि कुर्वीत तस्याभर्त्ता विनश्यति॥-नारदः, मु0 चिन्तामणिः विवाहप्रकरणम्-पीयूषधारा-टीका *
4. मुहूर्तचिन्तामणिः विवाहप्रकरणम् श्लो सं0 23

सख्यं वैरं च भक्ष्यं च वश्यमाहुस्त्रिधा बुधाः। वैरे भक्ष्यगुणाभावो द्वयोः सख्ये गुणद्वयम्। वश्यवैरे गुणस्त्वेको वश्यभक्ष्ये गुणोऽधिकः। यद्यपीदं वधूवरयोः तुल्यमेवोक्तम्, तथापि सत्यावश्यकत्वे वरं प्रति भक्ष्यत्वं वश्यत्वं वा स्त्रियोपेक्ष्यं न तु विपरीतम्।

**ताराकूटम्**- ताराकूटं वस्तुतः नक्षत्राश्रितम्। जन्मनक्षत्रादारभ्य क्रमशः गणनया ताराज्ञानं भवति। कन्याजन्मनक्षत्राद्वरनक्षत्रं यावद् गणयेत् ततो प्राप्ते विशिष्टेऽङ्के नवभिर्भक्ते सति यदवशिष्टं तच्च त्रिपञ्चसप्तमितं चेत्भवेत् तदाऽशुभदम्, अन्यथा द्विचतुःषडष्टनवमितं चेत्स्यात्तदा शुभदमिति।

यथोक्तम् -

**कन्यार्क्षाद्वरभं यावत्कन्याभं वरभादपि।**
**गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतम्।।**[5]

अस्य ताराकूटस्यापरं नाम दिनकूटमप्यस्ति।

यथाह नारदः

**स्त्रीभमारभ्य गणने नव पर्यायतः क्रमात्।**
**जन्मत्रिपञ्चसप्तमस्थं पुम्भं स्याद्वरनाशनम्।।**

**पुंभमारभ्य गणने स्त्रीभं जन्मादिके स्थले।**
**स्त्रीविनाशो भवेत्तस्माद्दिन कूटं विवर्जयेत्।।**[6]

**गुणविचारः**-

उभयोः वरकन्ययोः ताराशुभा चेत् तर्हि गुणत्रयं एकतः शुभा तारा अन्यत्रोऽशुभाचेत् तदा सार्द्धोगुणः उभयोर्तारा अशुभाचेत् तदा गुणशून्यं समादिशेदिति। अत्रेदमपिज्ञातव्यमस्ति यदुभयतोऽशुभतारा कदापि नैव भवति।

**योनिकूटम्**-योनि कूटमपि नक्षत्राश्रितमेव। अश्विन्याद्यष्टाविंशति नक्षत्राणामश्वगज-मेष-सर्पादिचतुर्दशयोनयः सन्ति।[7] तासां पारस्परिकसम्बन्धः पञ्चविधः

1. मैत्रम् 2. अतिमैत्रम् 3. साम्यम् 4. वैरम 5. अतिवैरम्

---

5. मुहूर्तचिन्तामणिः विवाहप्रकरणम् श्लो सं0 24
6. मुहूर्तचिन्तामणिः विवाहप्रकरणम् पीयूषधाराटीका

वरकन्ययोः नक्षत्रयोः एकयोनिः स्यात् उत्वा उभयोर्नक्षत्रे भिन्नयोन्योः स्यातां तदा विवाहः शुभदः प्रोक्तः। यदि उभयोर्नक्षत्रे परस्परं महावैरयोन्योः स्यातां तर्हि विवाहो त्याज्यः। उभयोर्नक्षत्रे चेत् मैत्र योन्योः स्यातां तदापरमप्रशस्तः परिणयः। यथोक्तञ्च-

**एक योनिषु सम्पत्यै दम्पत्योः सङ्गमः सदा।**
**भिन्न योनिषु मध्या स्यादरिभावो न चेत्तयोः॥**

**योनेश्चाभावे नोद्वाहः सतु कार्यो वियोगदः।**
**राशिर्वश्यं च यद्यस्ति कारयेन्नतु दोष भाक्॥**

अत्र दोषो वियोगरूपः।

**गुणविचारः**

वरकन्ययोः योन्योः परस्परं महद्वैरे गुणशून्यं, वैरे एको गुणः स्वभावे गुणद्वयं, मैत्रे त्रयो गुणाः, अतिमैत्रे चत्वारः गुणाः प्रोक्ताः।

यथोक्तम्-

**अष्टाविंशतिताराणां योनयस्तुचतुर्दश।**
**मैत्रंचातिमैत्रञ्च विवाहेनरयोषितोः॥**

**महद्वैरेच वैरेच स्वभावेच यथा क्रमम्।**
**मैत्रो चैवातिमैत्रेच खेन्दुद्वित्रिचतुर्गुणाः॥[8]**

**ग्रहमैत्रीकूटम्**

ग्रहमैत्रीकूटं राश्याश्रितम्। वरकन्ययोः राश्योरेकाधिपतित्वे मित्रत्वे चोद्वाहः परमप्रशस्तःकथितः, सममित्रत्वे सत्यपि विवाहः शुभदः द्वयोः राश्योः साम्ये सति परिणयस्तु मध्यमफलदः, द्वयोः राश्योः मित्रवैरेसति सम्बन्धस्तु निकृष्टः, द्वयोः राश्योः वैरेसति सम्बन्धः निकृष्टतमः भवति।[9]

**अस्यापवादः** - दम्पत्योः परस्परं खेटवैरेऽपि नवांशनाथयोः मित्रत्वेसति विवाहो पुत्र-पौत्रादि-प्रवर्द्धकः भवति। तत्रोक्तम् -

**( क ) अन्योऽन्यमित्रं शस्तं स्यात्सममित्रं तु मध्यमम्।**
**उदासीनं कनिष्ठं स्यान्मृतिदं शात्रवं स्मृतम्॥**

7. मुहूर्तचिन्तामणिः विवाहप्रकरणम् श्लो सं0 25, 26
8. मुहूर्तचिन्तामणिः विवाहप्रकरणम् पीयूषधाराटीका
9. तत्रैव

शुत्रुमित्रं च विज्ञेयं दम्पत्योः कलह-प्रदम।
अन्योऽन्यसमशत्रुत्वं दम्पत्योर्विरहप्रदम्।[10]

( ख ) राशिनाथे विरूद्धेऽपि सबलावंशकाधिपौ।
तन्मैत्रेऽपि च कर्त्तव्यं दम्पत्योः शुभमिच्छता॥[11]

ग्रहमैत्रं सप्तविधं भवति-

1. एकाधिपतित्वम्।
2. मित्रत्वम्।
3. सममित्रत्वम्।
4. साम्यत्वम्।
5. मित्रवैरम्।
6. समवैरम्।
7. परमवैरम्।

**गुणविचारः**

तत्र एकाधिपतित्वे मित्रत्वे च गुणपञ्चकं, सममित्रत्वे चत्वारः गुणाः, द्वयोः साम्यत्वे त्रयो गुणाः, मित्रवैरे सत्येको गुणः, समवैरे गुणार्द्धकं, द्वयोः राशिनाथवैरे गुणशून्यं भवति।

**गणकूटम् -**

देव-मानुष-राक्षससंज्ञकाः त्रयोगणाः भविन्त।

देवगणोत्पन्नः जातकः स्वभावतः सात्विकः उदारः सहिष्णुः परोपकारभावनयाभावितः धैर्ययुक्तो भवति।

मानुषगणोत्पन्नः जातकः चातुर्यगुणोपेतः साहसिकः, दूरद्रष्टा व्यवहारदक्षश्च भवति।

राक्षस गणोत्पन्नः जातकःकाम-क्रोध-लोभ-मोह-मद्-मात्सर्यादिदुर्गुणासक्तः परनिन्दकः स्वार्थपरायणश्च भवति। उग्रकार्यरतः एकाधिकारे दृढ़विश्वासो भवति।

---

10. तत्रैव
11. तत्रैव

देवगणयोः वरकन्ययोः परस्परमत्युत्कृष्टा प्रीतिः, देव मनुष्यगणयोः स्त्रीपुंसयोः पारस्परिकी प्रीतिः मध्यमा, राक्षसमनुष्यगणयोः वरकन्ययोः मृत्युरेव प्रदिष्टः। प्रबलेन दुर्बलं बाध्यते इति न्यायेन राक्षसमनुजगणयोर्मध्ये गणस्यैव नाशः।[12]

**यथोक्तम्**

**स्वगणेचोत्माप्रीतिर्मध्यमामरमर्त्ययोः।**
**मर्त्यराक्षसयोर्वैरमसुरासुरयोरपि।।**

**राशिकूटम् ( भकूटम् )**

सदसत्भेदात् भकूटं षड्विधम्-

**( सद्भकूटम् )** 1-सम-सप्तकम् 2-तृतीयैकादशम् 3-चतुर्थ-दशकम्

**( असद् भकूटम्- )**

2. द्विर्द्वादशम् 2. तृतीयैकादशम् 3. षष्टाष्टकम्

भकूटज्ञानार्थ वर-राशितः कन्याराशिपर्यन्तं एवमेव कन्या-राशितः वर-राशिं यावत् गणना कार्या। वर-कन्याराश्योः परस्परं द्विर्द्वादशे सति द्विर्द्वादशभकूटम्, राश्योःपरस्परं नवपञ्चके सति नवपञ्चकभकूटम्, राश्योःपरस्परं षष्ठाष्टके सति षष्ठाष्टकंभकूटं भवति।

अशुभफलदानत्वादेतदसत्भकूटत्रयं मेलापके मुख्यत्वेन विचार्यते।

तत्रा हि स्त्री-पुंसयोः राश्योः परस्परं षष्ठाष्टम् राशित्वे सति मृत्युर्ज्ञेयः। उभयोःराश्योः नवपञ्चमे सन्तानहानिः, द्वयोः राश्योः द्विर्द्वादशेसति दारिद्रयं स्यात्।[13] तथाऽन्यत्र तृतीयैकादशे चतुर्थदशमे समसप्तमे वा विवाहः प्रशस्तः कथितः। परन्तु सद्भकूटेऽपि राशिनाथयोः मैत्री नवांशस्वामिनोर्वामैत्री नूनमपेक्ष्यत एव। तत्रोक्तमपि-

**मृगः कुलीरेण घटेन सिंहोवैरप्रदः स्यात्समसप्तकोऽयम्**
**तुलावृषेणाथ वृषेण सिंहो मेषेण कीटो मिथुनेन मीनः।**
**चापेन कन्या घटभेन चालिर्दौभाग्यदैन्येदशतुर्यकेऽस्मिन्।।**

गुणविचारः-

---

12. मुहूर्तचिन्तामणिः विवाहप्रकरणम्- श्लो0-30
13. मुहूर्त्तचिन्तामणिः विवाहप्रकरणम्-श्लो.31

उभयोः राश्यैक्ये, तृतीयैकादशे, चतुर्थदशमे, समसप्तमे वा सप्तगुणाः मिलन्ति अन्यथा गुणशून्यं भवति।

## दुष्टानांगणकूटभकूट-ग्रहकूटानां परिहारः

वरकन्याराशिस्वामिनो:मैत्र्यां सत्यां राशिनवांशयोः युग्मं तस्यापि मैत्र्यां सत्यां दुष्टगणानां दोषो न भवति। अर्थात् यदि स्त्री रक्षोगणा पुमान्मनुष्यगणो देवगणो वा तदा गणदोषो न स्यादिति। उभयोः राशिनाथयोः शुभफलदं राशिकूटं तृतीयैकादशादिकं शत्रुतासम्बन्धिनं दोषं नाशयेत्।[14]

यथोक्तं विवाह पटले-

**नभोगारिभावंहरेत्सद्भकूटं।**
**विरूद्धंभकूटं हरेत्खेट मैत्री।**
**एकाधीशे मित्राभावे शुभदंपाणिपीड़नम्।**
**द्विर्द्वादशे त्रिकोणेच न कदाचित्षडष्टके।।**[15]

दुष्टराशिकूटेसत्यपि यदि वरकन्याराश्योरेकाधिपत्यं मैत्रं वा स्यात् तदा विवाहो शुभो निर्दिष्टः। यथा षष्ठाष्टके मेषवृश्चिकयोस्तुलावृषयोर्वा द्विर्द्वादशे मकर कुम्भयोः अत्र नवपञ्चमे त्वेकाधिपत्याभावत्वात् राशिस्वामिनोः मैत्रोऽपि परिणयः शुंभदः कथितः। तेन षष्ठाष्टके मीनसिंहयोरित्यादौ, नवपञ्चमे मेषधनुषेरित्यादौ, द्विर्द्वादशे मीन-मेषयोरित्यादौ शुभदो विवाहः।[16]

### नाडीकूटम् :-

मेलापक विचारप्रक्रियायां नाड़ी दोष विचारः मुख्यत्वेन क्रियते। मेलापके सर्वेष्वपिकूटेष्वस्यैव सर्वाधिकाः गुणाः। नाड़ीकूटानुकूल्येन अष्टौ अंकाः प्राप्यन्ते।[17] वस्तुतः आदिमध्यान्तरूपत्वात् तिस्त्रः नाडयः स्वीकृताः। आयुर्वेद-परम्परायामपि वात-पित्त-कफात्मकाः तिस्त्रः नाडयः सन्ति। ज्योतिषशास्त्रे याः नाडयः विवेचिताः तासामपि सम्बन्धः आयुर्वेदे विवेचितानां नाडिभिः सह वर्तते। तेन वरकन्ययोः एकनाड़्यां सत्यां दोषो भवति[18] यथा वर-कन्ययोः यदि आदिनाड़ी स्यात् तदा वातदोषजन्याः व्याधयः

---

14. मुहूर्तचिन्तामणिः-विवाहप्रकरणम्-श्लोक सं033
15. मुहूर्तचिन्तामणिः पीयूषधारा
16. नाडीकूटं तु सङ्ग्राह्यं कूटानां तु शिरोमणिः।
    ब्रह्मणा कन्यकाकण्ठसूत्रत्वेन विनिर्मितम्।
17. एकराशौ पृथग्धिण्ये दम्पत्योः पाणिपीडनम्।
    उतमं मध्यमं भिन्नराश्येकर्क्षगयोस्तयोः।। -मु0 चि0 विवाह प्रकारण-पीयूष धा0 टी0
18. आद्यैकनाडी कुरूते वियोगं मध्याख्यनाडयामुभयोर्विनाशः।
    अन्त्या च वैधव्यमतीव दुःखं तस्माच्च तिस्त्रः परिवर्जनीयाः।। मु0 चि0 विवाह प्रकारण-पीयूष धा0 टी0

पीड़यन्ति, तेन आद्यानाडी वियोगं कुरुते। यदा उभयोः स्त्रीपुंसयोः मध्य-नाड़ी स्यात् तदा पित्तदोषजन्याः व्याधयः पीड़यन्ति, अस्यां हि नाडयामुभयोर्विनाषः कथितः यदाचोभयोः अन्त्यनाड़ी स्यात् तदा कफदोषजन्यव्याधिभिः वर-वधूः पीड़येते वैधव्यमतीव-दुःखप्रदफलञ्च भवति। इत्थं स्त्रीपुंसयोरेकनाडयां परिणयनं दुष्टफलदं भवति।[19]

अनेनैव कारणेन सर्वेष्वपि परिहारेषु नाड़ीशुद्धिरपेक्षितैव। नाड़ीविरोधसत्वे तु विवाहो नैव करणीयः।

नाड़ीदोष- परिहारः -

**क. स्त्रीपुंसयोः एकराशौ भिन्ननक्षत्रे सति नाड़ी दोषो न भवति।**

**ख. एकर्क्षगयोः दम्पत्योः भिन्नराश्योः नाड़ी दोषो न भवति।**

**ग. स्त्रीपुंसयोः राश्यैक्येनक्षत्रैक्ये यदि चरणभेदो यथा रोहिणीनक्षत्रस्य प्रथम पादे पुंसोःजन्म द्वितीयपादे च स्त्रियास्तदापि विवाहः शुभदो भवति।**[20]

षष्ठाष्टमनवपञ्चमद्विर्द्वादशाख्येषु दुष्टभकूटेषु सत्सु परस्परं ग्रहमैत्र्यै एकः परिहारः एकाधिपत्यं द्वितीयः, ग्रहवैरेप्यंशपयोः सबलत्वं मैत्री च तृतीयः ताराशुद्धिश्चतुर्थः, राशिवश्यत्वं पञ्चमः। सर्वेष्वपि परिहारेषु नाडीशुद्धिरपेक्षितैव। नाडीविरोधसत्वे तु विवाहो नैव स्यादिति।

एवमऽष्टकूटानां कुण्डलीमेलापके महन्महत्वमुपवर्णितमस्ति जातक ग्रन्थेऽषु मुहूर्त्तग्रन्थेषु च ।

---

19. अभिन्नराश्योर्यदि भिन्नमृक्षं यदि भिन्नराश्योः।
प्रीतिस्तदानीं निबिडा नृनार्योश्चेत्कृत्तिकारोहिणिवन्न नाडी।।

20. आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम्।
द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम्।।
एवं भांशव्यधो येषां जायते वरकन्ययोः।
तेषां मृत्युर्न सन्देंहः शेषांशाः स्वल्पदोषदाः।।

# विवाहविचारसमीक्षा

डॉ. फणीन्द्रचौधरी

**यथा वायु समाश्रित्य वर्तन्ते सर्वजन्तवः।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः॥**

**यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्।**
**गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही॥[1]**

अयञ्चाश्रमः पत्नीं विना असम्भवः। पराशरानुसारं पुरुषः गृहस्वामीत्वेनैव न हि भवति गृहस्थोऽपितु भार्यायुक्तो जन एव कथ्यते गृहस्थः। यथा-

**न गृहेण गृहस्थः स्याद् भार्यया कथ्यते गृही।[2]**

देव-पितृ-मनुष्याणा ऋणभारः मानवोपरि भवति। तत् परिशोधनाय विवाहोऽनिवार्यः। एवञ्च पुत्रलाभोऽपि महत्त्वपूर्णलाभो भवति विवाहस्य। यतः पुत्र एव विभिन्नधर्मकर्मणां ध्वजवाहको भवति। पत्नी सामाजिकसम्मानदृष्ट्यापि महत्त्वपूर्णा। इयं हि निज पत्युः विविधप्रकारेण धर्मविहितजीवनयापने साहाय्यं करोति। पत्नी खलु पतिं कल्मषाद् वारयति। उक्तञ्च-

**संसारकल्मषात्त्रात्रीकलत्रमिति तां ततः।[3]**

पत्नीयुक्तः पुरुषः विश्वसनीयो मन्यते। यथा-

**यः सदारः स विश्वास्यस्तस्माद् दाराः पराः गतिः।[4]**

एवं पत्नी धर्मकृत्येषु अर्थोपार्जने अथवा कामस्य मर्यादितलोकोपकार्युपभोगाय प्रशस्ता अस्त्येव। इयं हि मोक्षदृष्ट्यापि अनल्पमहत्त्वपूर्णा। विवाहः सांसारिकसुखस्य विधानं करोति। अनासक्तिमार्गं च प्रशस्ती करोति। यतोहि विषयसुखस्य परिचयानन्तरं तस्माद् विरक्तिः सम्भाव्यते।

---

1. मनु. 3/77-78
2. बृहत्पाराशरस्मृतिः 6/71
3. स्क. पुरा. 1, 2/15-19
4. महाभारत आदि. 744/4

एवं मानवजीवने पत्न्याः महत्त्वपूर्णस्थानमस्त्यत्र नहि मनागपि सन्देहावसरः। इदमेव कारणं यत् पुरुषायोपयुक्त-पत्न्याश्चयनमथवा स्त्रियै उपयुक्त-पुरुषस्य चयनं प्राचीनकालादेव महत्त्वपूर्णं स्वीकृतम्। विवाहात्पूर्वं पत्नीविषये पतिविषये वा अनेकानेकप्रश्नाः मस्तिष्के समायान्ति। एतत् सम्बन्धे ज्यौतिषस्य भूमिका महत्त्वपूर्णा अस्ति। भारतीयपरम्परानुसारं सुखमयसमृद्धिपूर्णदाम्पत्यकामनया विधिवद्वरवधूचयनमावश्यकम्। जन्माङ्गस्य समुचितविवेचनेन दाम्पत्यसम्पन्नता उपलब्धयः संघटन-विघटन-तथ्यानां प्रामाणिकमुद्घाटनम् भवति, यद्धि ज्यौतिषशास्त्रस्य मेलापकीयशाखा-ग्रहमेलापकञ्च क्रियते।

प्रथितेषु षोडशसंस्कारेषु विवाहोऽन्यतमः। वेदभाष्यकारः सायणाचार्यः विवाहस्य निर्वचनं **'तदिदं विपर्यासेन सम्बन्धनयनं विवाहम्'**[5] करोति। अर्थात् विश्वकल्याणाय परस्परविरुद्ध-स्वभावयोः मौलिकशक्तयोः परस्परं सम्बन्धस्थापनं विवाहः। येन संस्कारबलेन मानवः स्वकीयमाध्यात्मप्रपञ्चम् अधिभूतप्रपञ्चद्वारा अधिदैवतप्रपञ्चेन सह एकीकरण-सामर्थ्यं प्राप्नोति सः विवाहः।

शतपथब्राह्मणे[6] भगवतो याज्ञवल्क्यस्य विज्ञानमस्ति यत् विवाहं विना मानवः अपूर्णो भवति। पूर्णपुरुषस्य परब्रह्मपरमात्मनः सायुज्यप्राप्तये अर्धेन्द्रतायाः पूर्णेन्द्रता आवश्यकी। अर्धेन्द्रपुरुषस्य सा पूर्णता विवाहे नैव लभ्या। येन संस्कार-बलेन लौकिकरागं दिव्यरागे परिवर्तितुं शक्यते स विवाहः। यतोहि लौकिकरागः आसक्तिः अलौकिकरागश्च भक्तिः। अर्थात् लौकिकासक्ति एवेदं जगत् ईश्वरासक्तिश्च भक्तिः। भक्ति एव मुक्तिः। लौकिकासक्तेः तिरोभावः तथा अलौकिकासक्तेः आविर्भावः ब्रह्मचर्य-संयम-सेवा-सदाचारादयः दिव्यगुणाधीनः। दिव्यगुणोत्पादनेऽयं विवाहः सहायको भवति।

विवाह-संस्कारमपि महर्षि-वात्स्यायनः मुक्तपरम्परया कारणं स्वीकरोति।[7]

**तदेतत् ब्रह्मचर्येण परेण च समाधिना।**
**विहितो लोकयात्रार्थं न रागार्थोऽस्य संविधिः॥**

**एवमर्थं च कामं च धर्मं चोपचरन्नरः।**
**इहामुत्र च निःशल्यमत्यन्तं सुखमश्नुते॥**

नियन्त्रितकामसेवनं भगवदुपासना भवति। गीतायाः ऐतरेयब्राह्मणस्य चायमादेशः।

येन संस्कारबलेन मानवः त्रिभिर्ऋणैः मुक्तिमधिगच्छति स विवाहः। यतोहि **जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया-पितृभ्यः।**[8] अर्थात्

---

5. ऐतरेयब्राह्मणम्
6. शतपथब्राह्मणम्
7. कात्यायनश्रौतसूत्रम्
8. तैत्तिरीयसंहिता 6/3/10/5

त्रिभिर्ऋणैः ऋणवान् मानवः यज्ञसम्पादनेन, प्रजोत्पादनेन, अतिथिसेवया च मुक्तिमधिगच्छति। अतएव प्रत्येकस्यां दशायां विवाहसंस्कारः आवश्को भवति। कथं तु **'अयज्ञियो वा एष योऽपत्नीकः'**।[9] अर्थात् अपत्नीको पुरुषः अयज्ञियः यज्ञहीनो वा भवति। तस्य अर्धाङ्गिनी पत्नी एव पूर्णतामधिप्रापयति। **'अथो अर्धो वा एष आत्मनः यत् पत्नी।'**[10] तथा च व्यासः **'यावन्न विद्यते जाया तावदर्धो भवेत्पुमान्'**[11] नार्धं प्रजायते सर्वं प्रजायेतेत्यपि श्रुतिः। विवाहभेदाः तत्र विवाहशब्देन पाणिग्रहणाख्यः संस्कार-विशेष उच्यते ते च विवाहा अष्टौ। तद्यथा-

**ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः।**
**गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः।।**[12]

प्रतिपादितेषु अष्टविधि-विवाहेष्वाद्य-विवाह-चतुष्टयः प्रशस्तः शेषचतुष्ट्यश्चाप्रशस्तः। एतेषु प्रथमो ब्राह्मः सर्वोत्तमः मन्यते। पञ्चमो आसुरः षष्ठश्च गान्धर्वः एतावपि ग्राह्यौ, परमन्तिमौ राक्षसपैशाचौ निन्द्यौ आस्ताम्।

**1. ब्राह्मविवाहः**-विवाहसंस्कारस्य शुद्धतमः विकसितश्च ब्राह्मविवाहः। अस्मिन् पिता श्रुतिशीलवते वरायाहूय अर्चयित्वा वस्त्राभूषणैर्यथाशक्त्यलंकृता च कन्या दीयते। उक्तञ्च-

**आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम्।**
**आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः।।**[13]

ब्राह्म-विवाहादुत्पन्नो जातः उभयतः पित्रादीन्दश पुत्रादींश्च दश, आत्मानं चैकविंश पुरुषान् पुनाति।[14]

**2. दैवविवाहः**-अष्टविध-विवाहेष्वयं द्वितीयः। ज्योतिष्टोमादि यज्ञप्रारब्धे यथाविधि ऋत्विजे कर्मकर्त्रे अलंकृत्य कन्या दीयते स दैवो विवाहः।

**यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते।**
**अलङ्कृत्य सुतादानं दैवं धर्मं प्रचक्षते।।**[15]

---

9. तैत्तिरीयब्राह्मणम् 2/2/2/6
10. तैत्तिरीयब्राह्मणम् 2/9/4/7
11. बृहद्दैवज्ञरञ्जने, अध्याय 71, श्लो. 6
12. मनुस्मृतिः 3/21, या. स्मृ. 1/58-61
13. मनुस्मृतिः 3/27
14. याज्ञवल्क्यस्मृतिः 3/58
15. मनुस्मृतिः 3/28

अस्मात् विवाहादुत्पन्नो पुत्रः सप्तावरान् सप्तपरान् अर्थात् चतुर्दश पुरुषान् पुनाति। बौधायनानुसारेण यज्ञान्ते दक्षिणारूपा कन्या भवति स्म। तद्यथा-दक्षिणासु दीयमानास्वन्तर्वेदि यदृत्विजे दैवः। देवयज्ञावसरे दानाद्दैवो विवाहः। यज्ञेषु सेवार्थं ऋत्विजः नृपेभ्यः कन्याः प्राप्नुवन्ति स्म।

**3. आर्षविवाहः**-तृतीयोऽयं प्रकारः अष्टविधविवाहस्य। एकं गोमिथुनं द्वे वा वराद्धर्मतो धर्मार्थयागादि सिद्धये कन्यायै वा दातुं न तु शुल्कबुद्ध्या गृहीत्वा यद्यथाशास्त्रं कन्या-दानं स आर्षो विवाहो विधीयते। उक्तञ्च-

**एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।**
**कन्याप्रदानं विधिवदार्षो धर्मः स उच्यते।।**[16]

आर्षविवाहे वरादादानं स्पष्टतः कन्यामूल्यं नासीत् तथापि धनप्राप्तेः यत्किञ्चिद्भागः आसीदेव। आश्वलायन-बौधायन-आपस्तम्बादीनां विषयेऽस्मिन् मतैक्यं दृश्यते। भगवान् मनुरत्र वरपक्षतः आदानं शुल्कं अस्वीकृत्य केवलं अर्हणं स्वीकरोति।

**यासां नाददते शुल्कं ज्ञातयो न स विक्रयः।**
**अर्हणं तत् कुमारीणामानृशंस्यं च केवलम्।।**[17]

**वीरमित्रोदयानुसारेण**-धर्मनिमित्तो ह्यसौ सम्बन्धो न लोभनिमित्तकः। गोमिथुनग्रहणञ्च स्वयं कन्योपकारण-दाना-समर्थस्य तद्दानार्थ वेदितव्यम्।[18]

अर्थादार्षे वरादादानं निश्चितपरिमाणत्वात् कन्यायाः शुल्कं न, यतोहि कन्यया साकमेव वराय प्रत्यर्पणं भवति। कतिपय आचार्याः आर्षविवाहे एकं गोमिथुनं प्रदानाय उच्यन्ते, परं नोचितम्। यतोहि अल्पादल्पतरमादानं शुल्कमेव।

**आर्षो गोमिथुनं श ुल्कं केचिदाहुर्वृथैव तत्।**
**अल्पोऽप्येवं महान् वाऽपि विक्रयस्तावदेव सः।।**[19]

**4. प्राजापत्यविवाहः**- प्राजापत्यश्चतुर्थो विवाहः प्रकारः अष्टविधेषु। 'सह धर्मं चरताम्' इति परिभाष्य कन्यादानं स प्राजापत्यः। तद्यथा-

**सहोभौ चरतां धर्ममिति वाचाऽनुभाष्य च।**
**कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिस्स्मृतः।।**[20]

---

16. मनुस्मृतिः 3/29
17. मनुस्मृतिः 3/54
18. वीरमित्रोदय संहिता भाग-1, पृ. 822
19. मनुस्मृतिः 3/53
20. मनुस्मृतिः 3/30

अत्र आश्वलायनः– **'सह धर्मं चरत इति प्राजापत्यः।'**[21] प्राजापत्यविवाहे पिता स्वयमेव सुता–प्रदानकाले सह युवां धूर्मं कुरुतमिति वचसा पूर्वकं अर्चयित्वा कन्यादानं करोति, सैव प्राजापत्यः। यथा नाम्ना एव ज्ञायते यत् पितृ ऋणमुक्तये अर्थात् सन्तानोत्पत्तिं विधाय भरणपोषणार्थं वैवाहिकबन्धने बद्धो भवति।

**सहधर्मं क्रियाहेतोर्दानं समयबन्धनात्।**
**अलङ्कृत्यैव कन्याया विवाहः स प्रजापतेः॥**[22]

आधुनिकाः पाठकाः प्रकारमिमं युक्तियुक्तं स्वीकरिष्यन्ति। यतोहि प्राजापत्ये वरवध्वोः समकक्षतां भवति। परं प्रशस्तेषु चतुर्षु विवाहेषु निम्नतरः अस्तीति स्मृतिकाराः वदन्ति। अस्य कारणमस्ति यत् स्वातन्त्र्यरहितं दानमिदं समयबन्धने बद्धमस्ति। हिन्दूधर्मावलम्बिनां दानविषयिणी धार्मिकभावनायाः दानमिदं प्रतिकूलमस्ति। प्राजापत्यविवाहस्य प्रचलनं अतिप्राचीनकाले आसीदत्र संदेहः। समाजस्योन्नत–दशायामेव शिक्षिताः अनुसरणं कृतं भविष्यति। यतोहि प्राजापत्यविवाहाय इति अनुमीयते। कथं तु विवाहेऽस्मिन् वरवध्वोः वयस्कतायाः अपेक्षा भवति। विवाहोऽयं त्रयोदशपुरुषान् पुनाति।

**5. आसुरविवाहः**– अप्रशस्तेषु चतुर्षु विवाहप्रकारेषु प्रथमोऽयमासुरः। यस्मिन् कन्याया ज्ञातिभ्यः पित्रादिभ्यः यथाशक्तिधनं दत्वा आदानमासुरः। अत्र आर्ष इव न शास्त्रीयधनजातिपरिमाणनियमत्वात् स आसुरो विवाहः उच्यते।

**ज्ञातिभ्यो द्रविणं दत्वा कन्यायै चैव शक्तितः।**
**कन्याप्रदानं स्वाच्छन्द्यादासुरो धर्म उच्यते॥**[23]

वैदिककाले कतिपयानि उदाहरणानि मिलन्ति येषु धनाय कन्याया विनिमयं भवति स्म। यदा–कदा लोभाभिभूता सती कन्या स्वयमेव धनाढ्येन सह वैवाहिकसम्बन्धः स्थापयति स्म, स वरः अन्येन प्रकारेण अयोग्यः कथं न भवेत्।

**कियती योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण।**[24]

ऋग्वेदे एकस्मिन् मन्त्रे ऋषिः अश्विनीकुमाराभ्यां विजामाता सदृशं दाक्षिण्यता हेतो प्रार्थयति–

**आश्रवं हि भूरिदावत्तरा वा विजामातुरुत वा घा स्यालात्।**[25]

महर्षिर्यास्कः विजामातृः क्रीतापतिः एतयोः शब्दयोः समानार्थकत्वं स्वीकरोति। मैत्रायणीसंहितायां क्रीतापत्न्या अविश्वसनीयताया चरित्रहीनतायाश्च निन्दा कृताऽस्ति–

---

21. आश्वलायनगृह्यसूत्रम् 1/6
22. वीरमित्रोदयसंहिता, भाग–2, पृ. 851
23. मनुस्मृतिः 3/31
24. ऋग्वेदः 10/27/12
25. ऋग्वेदः 1/109/2

**अनृतं वा एषा करोति या पत्युः, क्रीता सती अन्यैः सञ्चरति।[26]**

महाभारतेन ज्ञायते यत् पितामहो भीष्मः कुरु-राजकुमारेभ्यः कन्यां क्रीतवान्–

**पूर्वैः प्रवर्तितं किञ्चित् कुलेऽस्मिन् नृपसत्तमैः।**
**साधु वा यदि वासाधु तन्नातिक्रान्तुमुत्सहे।।[27]**

यदा स क्रेतुं शल्यमधिगच्छति तदा तं परिस्थितेः कठिनताया गम्भीरतायाश्च अनुभवोऽभवत्। परं कन्यायाः शुल्कप्रथाऽवरोधस्योत्साहः नासीत्। राजवंशेषु विनिमयापेक्षया एका प्रथाऽसीत्।

तत्र भीष्मः स्वीकरोति यदस्मिन् विनिमये कोऽपि दोषः पापो वा नास्ति। स्मृतिकाराः आसुर-विवाहस्योल्लेखः प्रथारूपेण कुर्वन्ति। परं स्वतन्त्रविचारेण निन्दन्ति, विवाह-वरणे विनिमयमेव स्वीकुर्वन्ति। कन्याया पिता अण्वपिशुल्कत्वेन न गृह्णीयादिति भगवान्मनुः लिखति–

**न कन्याया पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि।**
**गृह्णन् हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी।।[28]**

बौधायनधर्मसूत्रानुसारेण धनेन क्रीता कन्या पत्न्याः स्थानं न लभते न च दैव-पितृक्रियासु अधिकारं प्राप्नोति। सा केवला दासी रूपा भवति।

**क्रीताद्रव्येण या नारी सा पत्नी विधीयते।**
**न सा दैवे न सापि ये दासीं तां कवयो विदुः।।[29]**

आसुर-विवाहस्य प्रथा सम्प्रत्यपि निर्धनपरिवारेषु अवलोक्यते। शास्त्रेषु क्रीताकन्यायाः चर्चा तु यत्र तत्र उपलभ्यते परं विवाहे कन्यापक्षतः शुल्क-ग्रहणस्योल्लेखोऽपि दृश्यते। विवाहस्य एकस्मिन् मन्त्रे 'वहतु' अथवा कन्यया सह देयवस्तूनां उल्लेखोऽस्ति।[30] अथर्ववेदे नृपस्येकस्य निन्दा कृता अस्ति यतः तस्य राज्ञी आगमनकाले पर्याप्तं धनं नानीतवती–

**'न अस्या जाया शतवाही कल्याणी तल्पमस्रियेत्[31]**

प्रायः आधुनिके सम्पूर्णे भारतवर्षे विशेषेण पूर्वोत्तर-भारते कन्या-पक्षतः प्रचुर-धनग्रहणस्य प्रथाऽवलोक्यते। यस्मिन् विवाहे धनस्य व्यवहारो भवति तादृशः विवाहः 'पशुविवाह' एवेति ऐतरेय ब्राह्मणं वदति।[32]

26. ऋग्वेदः 1/10/11
27. महाभारत आदिपर्वः 122/9
28. मनुस्मृतिः 3/15
29. बौधायनधर्मसूत्रम् 1/2/20
30. ऋग्वेदः 10/85
31. अथर्ववेदः 7/12
32. ऐतरेयब्राह्मणम् 1/16

**6. गान्धर्वविवाहः**– अष्टविध–विवाहेषु आसुरानन्तरं स्थानमस्ति गान्धर्वविवाहस्य। वरकन्ययोः अन्योन्यानुरागेण यः परस्पर–संयोग आलिङ्गनादिरूपः स गान्धर्वः। यस्मिन् विवाहे कन्या स्वयमेव वरचयनं करोति स गान्धर्वः नाम्ना उच्यते इति हारीत–गौतमादयो वदन्ति। गान्धर्व–विवाह–विषये भगवान् मनोः व्यापिका परिभाषा अनुभूयते–

**इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च।**
**गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसंभवः॥**[33]

अस्याः परिभाषायाः व्याख्या कुर्वता कुलूकभट्टः तत्रैव लिखति–कन्याया वरस्य चान्योन्यानुरागेण यः परस्पर–संयोग आलिङ्गनादि रूपः स गान्धर्वो ज्ञातव्यः। संभवत्यस्मादिति संभवः, यस्मात् कन्यावरयोरभिलाषादासौ संभवति। अत एव मैथुन्यः–मैथुनाय हितः। सर्वविवाहानामेव मैथुन्यत्वेन यदस्य मैथुन्यत्वाभिधानं तत् सत्यपि मैथुने न विरोध इति **'प्रदर्शनार्थम्'**। विवाहेऽस्मिन् माता–पित्रोः स्थानं न संभवति।

गान्धर्व–विवाहः पैशाच–राक्षसकालिकः अथवा ताभ्यामपि प्राचीनतरः। यतोहि विवाहस्यायं प्रकारः अन्येभ्यः स्वभाविकः। ऋग्वेदानुसारेण सैव वधू भद्रा उच्यते या सुवेशभूषया अलङ्कृता सती जन–समुदाये पत्युः वरणं करोति।[34]

अथर्ववेदस्यैकेन मन्त्रेण ज्ञायते यत् प्रायः पितरौ स्वकीयां दुहितां वरचयनस्य स्वातन्त्र्यं प्रदत्तमस्ताम् अपि च प्रेमप्रसङ्गसंवर्द्धनाय प्रत्यक्षतः प्रेरणा ददाति स्म। **'आ नो अग्ने सुमतिं संभलो गमेदिमां कुमारीं सह नो भगेन। जुष्टावरेषु समनेषु वल्गुरीषं पत्या सौभगत्वमस्मै।'**[35] कतिपयविचारकानामनुसारेण विवाहस्यायं प्रकारः प्रशस्तः आसीत् यतोहि अस्य मूलं पारस्परिक–आकर्षणे प्रेम्नि च विहितमस्ति। **'गान्धर्वमप्येके प्रशंसन्ति स्नेहानुगतत्वात्'**।[36] शकुन्तलाविषये पालकः पिता कण्वः कथयति यत्–**'सकामायाः सकामेन निर्मन्त्रः श्रेष्ठ उच्यते'**।[37] तथापि नैके स्मृतिकर्तारः विवाहमिमं अप्रशस्त एव वदन्ति। ते नैतिकधार्मिकाधारोपरि गान्धर्वविवाहं न स्वीकुर्वन्ति। **'गान्धर्वस्तु क्रियाहीनः रागादेव प्रवर्तते'**।[38] गान्धर्व–विवाहस्य दर्शनं कालान्तरे विलुप्तम् इदानीमपि भारतीय–विवाहपद्धतौ अस्य वैधता नास्ति।

---

33. मनुस्मृतिः 3/32
34. ऋग्वेदः 10/27/17
35. अथर्ववेदः 2/36
36 अथर्ववेदः 10/27/17
35. अथर्ववेदः 2/36
36. गौतमधर्मसूत्रः 3/1/31
37. महाभारतः 4/94/60
38. वीरमित्रोदयः भाग–2, पृ. 57

**7. राक्षसविवाहः**–अष्टविधविवाहेषु सप्तमोऽयं राक्षसः। बलपूर्वकं कन्याया हरणं राक्षसो विवाहः। भगवान् मनुः राक्षसविवाहस्य लक्षणं प्रस्तूयते–

**हत्वा छित्वा च भित्वा च क्रोशन्तीं रुदतीं गृहात्।**
**प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते।।[39]**

अत्रेदं ध्यातव्यं यद्यदा तु हर्तुः शक्त्यतिशयं ज्ञात्वा पित्रादिभिरुपेक्ष्यते तदा नावश्यकं हननादि। यदि कन्यापक्षः प्रतिपक्षतां याति तदा हननादिकमपि कर्तव्यम्। कन्यापक्षान्विनाश्य, तेषामङ्गच्छेदं कृत्वा, प्रकारादीन्भित्वा **'हा पितर्भ्रातरनाथाहं ह्रिये'** इति वदन्तीमश्रूणि मुञ्चन्तीं यो यदा कन्यां गृहादपहरति, तदा स राक्षसो विवाह उच्यते। कतिपयविदुषां मतमस्ति यत् विवाहस्यायं प्रकारः प्राचीनतरः यः आदिमजनेषु प्रचलित आसीत्। परं भगवान् मनुः राक्षसविवाहं क्षत्रियाय प्रशंसन्ति **'राक्षसः क्षत्रियस्यैकम्'**[40] पितामहभीष्मोऽपि महाभारते एकत्र कन्याया प्रसह्य अपहरणं क्षत्रियेभ्यः प्रशस्तं स्वीकरोति। **'क्षत्रियाणां तु वीर्येण प्रशस्तं हरणं बलात्'**[41]। भारतीयेतिहासे क्षत्रि-कालं यावदियं प्रथा प्रचलिताऽसीत्। अधिकांश स्त्रिय अपि हरणाय समुत्सुका भवन्ति स्म। उदाहरणार्थं पृथ्वीराजद्वारा संयोगितायाः हरणं सम्प्रति भारतवर्षे विवाहस्यास्य प्रकारस्य दर्शनं श्रवणं वा न भवति।

**8. पैशाचविवाहः**– अष्टविध-विवाहेष्वयं अन्तिमो अप्रशस्तश्च पैशाचः। निद्राऽभिभूतां मद्यमदविह्वलां शील-संरक्षणेन रहितां निर्जनदेशे यत्र विवाहो मैथुनधर्मेण प्रवर्तते, स पापहेतुर्विवाहानां मध्येऽधमः पैशाचः ख्यातः–

**सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति।**
**स पापिष्ठो विवाहानां पैशाचश्चाष्टमोऽधमः।।[42]**

याज्ञवल्क्यः– **कन्यकां छलात् पैशाचविवाहं परिभाषयति।[43]**

प्रतीयते विवाहस्यायं प्रकारः आदिमेषु असभ्यजनेषु प्रचलितः आसीत्। आधुनिककाले हिन्दू-विधौ विवाहस्त्रिविधः–

1. शास्त्रीयविवाहः
2. प्रथागतविवाहः
3. अधिनियमेषु वर्णितविवाहश्च।

---

39. मनुस्मृतिः 3/33
40. मनुस्मृतिः 3/24
41. महाभारतम् 1/245/6
42. मनुस्मृतिः 3/34
43. याज्ञवल्क्यस्मृतिः 1/61

अष्टविधविवाहेषु प्रशस्तेषु आद्यचतुर्ष विवाहेषु हिन्दूविधौ ब्रह्म एव मान्यः परं अप्रशस्तेषु अन्त्यचतुष्ट्येषु आसुर-गान्धर्वौ मान्यौ स्तः। अधुना-हिन्दू-विधौ विवाहो संविदा (Contact) रूपः यत्र उभयोः पक्षयोः सहमतिः भवति।[44]

**दाम्पत्यसुखविचारः[45]**

1. जन्मकुण्डल्यां सप्तमस्थानात् मुख्यरूपेण स्त्रीसुखविचारो भवति। एवं शुक्रचन्द्राभ्यामपि स्त्रीसुखविचारो भवति।
2. सप्तमेशः स्वराशौ उच्चे वा स्यात् चेत् तर्हि स्त्रीसुखपूर्णो भवति।
3. गुरुः सप्तमे भावे भवेत्, चेत् उत्तम स्वभावशीला पतिव्रता सुन्दरी स्त्री प्राप्यते तया बहुसुखलाभोऽपि भवति।
4. सप्तमेशः शुभग्रहो भवेत् चेत् एकस्त्रीसुखं भवति। सा स्त्री गुणवती सुन्दरी च भवति।
5. सप्तमभावे शुक्रस्य राश्यादिवर्गः स्यात् तदुपरि शुक्रस्य दृष्टिर्भवेत् उतवा शुभवर्गः शुभदृष्टो भवेत् चेत् बहुस्त्रीसुखं भवति।
6. लाभस्थाने चन्द्रो गुरुर्वा भवेत् चेत् उत्तमवस्त्रयुक्तः उत्तमस्त्रीसुखसम्पन्नः, विद्यावान्, धनाढ्यः राजपूज्यश्च भवति।
7. लग्नात् चन्द्रात् वा सप्तमो भावः शुभग्रहदृष्टियुक्तो भवेत् अथवा सप्तमेशात् दृष्टो भवेत् चेत् तर्हि वैवाहिकं सुखं लभ्यते।
8. पुरुषस्य जन्मकुण्डल्यां द्वितीये सप्तमे वा भावे स्त्रियाः सप्तमे अष्टमे वा गृहे शुभग्रहस्य उपस्थितिः दृष्टिर्वा भवेत् चेत् तर्हि दम्पत्तिः सर्वसुखसम्पन्नो भवति।
9. सप्तमे भावे पुंग्रहो भवेत् शुभग्रहस्य दृष्टिश्च भवेत् चेत् स्त्रीसुखप्राप्तिः भवति।
10. यदि स्त्रियाः सप्तमे गृहे स्त्रीग्रहस्य उपस्थितिः स्यात् शुभग्रहस्य दृष्टिश्चापि भवेत् चेत् स्त्रीपतिसुखं प्राप्नोति।
11. सप्तमेशः यस्मिन् राशौ भवेत् तस्मिन् राशौ अथवा तस्य त्रिकोणराशिनामुपरि उभयोर्मध्ये कस्मिंश्चित् एकस्मिन् स्थाने स्त्रीकुण्डल्यां चन्द्रग्रहो भवेत् चेत् तर्हि उत्तमसुखप्राप्तिर्भवति।

---

44. Special marriage act 1954, Section A-18, Hindu widows Remarriage Act, 1856.
45. सचित्र ज्यातिष शिक्षा फलित खण्डः तृतीयोभागः पृ. 170

**दाम्पत्यसुखस्याभावः**[46]

1. व्यये सप्तमे वा भावे द्वयोः अधिकानां वा पापग्रहाणाम् उपस्थितिर्भवेत् चेत् स्त्रीपुत्रयोः सुखस्याभावो भवति।

2. सप्तमेशः त्रिक्स्थाने, पापगृहे, पापग्रहयुक्तः, दृष्टः, अस्तः, नीचो वा भवेत् चेत् तर्हि पूर्णस्त्रीसुखं न लभ्यते।

3. सप्तमे यदि शनिः सूर्यसहितः दृष्टो वा भवेत् चेत् तर्हि तस्य जातकस्य पत्नी नश्यति। सः स्त्रीसुखं न प्राप्नाति।

4. द्वितीयसप्तमस्थानयोः पापग्रहाः अधिकाः भवन्ति चेत् तर्हि निश्चितरूपेण स्त्रीसुखस्याभावो भवति।

5. सप्तमे चन्द्रो भवेत् सप्तमेशश्च द्वादशभावे स्थितो भवेत् स्त्रीकारकः ग्रहश्च निर्बलो भवेत् चेत् तर्हि स्त्रीसुखस्याभावो भवति।

6. सप्तमस्थाने शनिर्निर्बलो भवेत् चेत् तर्हि दाम्पत्यसुखस्य अभावो भवति, पत्नीरोगग्रस्ता अशक्ता च भवति।

7. चन्द्रः शुक्रो वा पापग्रहयुक्तो दृष्टो वा भवेत् चेत् तर्हि स्त्रीसुखस्य अभावो भवति।

8. सप्तमे शनिः भौमो वा वक्री भवेत् चेत् तर्हि स्त्रीवियोगः सम्भवति। पत्न्या अपमृत्युश्चापि सम्भवति।

**दाम्पत्यमैत्रीविचारः**[47]

1. लग्नेश-सप्तमेशयोर्मध्ये तात्कालिकी मैत्री भवेत् चेत् पतिपत्न्योर्मध्ये मैत्री भविष्यति। उभयोर्मध्ये शत्रुत्वात् शत्रुता भविष्यति। समत्वात् समो भविष्यति।

2. लग्नेशः लग्ने, सप्तमेशः सप्तमे अथवा उभौ लग्ने भवेतां चेत् तर्हि पतिपत्न्योर्मध्ये प्रीतिराधिक्यं भवति।

3. स्त्रीपुरुषयोः उभयोराशी एकतवस्य भवेताम् चेत् मित्रतत्वस्य वा भवेताम् चेत् तर्हि परस्परं प्रेमसम्बन्धो भवति।

4. सप्तमे शुभग्रहस्य राशिः शुभग्रहयुक्तः शुभग्रहदृष्टो वा भवेत् चेत् तर्हि श्वसुरपक्षात् सुखोपलब्धिर्भवति।

---

46. सचित्र ज्योतिष शिक्षा फलितखण्डः तृतीयभागः, पृ. 179
47. सचित्र ज्योतिष शिक्षा फलितखण्डः तृतीयभागः, पृ. 179

5. सप्तमे सप्तमेशः स्यात् चेत् तर्हि स्त्री आज्ञाकारिणी भवेत्।

6. सप्तमेशः यदि लग्ने भवेत् तर्हि पतिः पत्न्याः आज्ञाकारी भवति।

7. सप्तमेशः बुधः यदि तत्रैव भवेत् तर्हि पुरुषः स्त्र्याधीनो भवेत्।

8. सप्तमस्थानं गुरुशुक्राभ्यां युक्तं दृष्टं वा भवेत् चेत् तर्हि मनोरमां पत्नीं प्राप्नति।

**निष्कर्षः**

उपर्युक्तेन विवेचनेन इदं स्पष्टं भवति यत् विवाहे दाम्पत्यसुखस्य विषये ज्योतिर्विद्भिः विविधं चिन्तनं कृतम्। तस्मादेव विवाहात्पूर्वं वरवध्वोः जन्मकुण्डलीं मेलापकचक्रानुसारं विलोक्य लत्तादिदशदोषं, अष्टकूटपरिहारादिकं च दाढर्येन चिन्त्यते। एतत् चिन्तनं विना यदि पाणिग्रहणसंस्कारस्य निर्णयः स्वीक्रियते चेत् दाम्पत्यसुखविषये न किमपि वक्तुं शक्यते। तस्मात् विवाहाद्यवसरेषु एतत् सर्वं भृशं विचारणीयम्।

# हिन्दुः हिन्दुविधिः - हिन्दुविधौ दत्तकः

डॉ. सुधांशुभूषणपण्डा

हिन्दुशब्दः पुंलिङ्गवाचको भवति। "हीनं दूषयतीति हिन्दुः" इति "शब्दकल्पद्रुमे"[1] उल्लिखितमस्ति। दूष्+डुः पृषोदरादित्वात् इति साधुवाचकोऽयं शब्दः, हिन्दुः जातिविशेषः। तत्रापि हिन्दुः भाषात्वेनापि परिगृह्यते। उक्तञ्च शब्दकल्पद्रुमे[2] मेरुतन्त्रस्य त्रयस्त्रिंशत्प्रकाशे यथा—

**पश्चिमाम्नायमन्त्रासु प्रोक्ताः पारस्यभाषया।**
**अष्टोत्तरशताशीतिर्येषां संसाधनात् कलौ।।**
**पञ्च खानाः सप्त मौरा नव शाहा महाबलाः।**
**हिन्दुधर्म्मप्रलोप्तारो जायन्ते चक्रवर्तिनः।।**
**हीनञ्च दूषयत्येव हिन्दुरित्युच्यते प्रिये।।**
**पूर्व्वाम्नाये नवशतं षड़शीतिः प्रकीर्तिताः।**
**फिरङ्गभाषया मन्त्रास्तेषां संसाधनात् कलौ।।**
**अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः।**
**इरेजा नव षट् पञ्च लण्ड्रजाश्चापि भाविनः।।**
**( मेरूतन्त्रे 33 प्रकाशे )**

अस्माद् हिन्दुशब्दः हीनं दूषयतीतित्वेन सिद्धत्वमापाद्यते। हिन्दुश्च धर्मत्वेनापि गृह्यत इति एतेभ्य एव श्लोकेभ्यो विज्ञायते। वस्तुतः अर्वाचीनोऽयं शब्दः प्राचीनेषु ग्रन्थेषु सर्वत्र वर्तते न वेति मृग्यम्।

[3]हिन्दुधर्मकोशानुसारं भारतवर्षे निवसतां लोकानां जातेः सामूहिकनाम एव हिन्दुः। एतेषां समष्टिगतं धर्मरूपं हिन्दुत्वम्। हिन्दुशब्दः भारतीयेतिहासे प्रायशः अर्वाचीनेषु ग्रन्थेषु एव दृश्यते। वस्तुतः हिन्दुशब्दः भौगोलिकवाचकः, मुस्लिमजनैः शब्दोऽयं 'फारस्" इरान्देशात् प्राप्तः। फारसीकोशे 'हिन्द्' तत्सम्बन्धीयाश्च शब्दाः बाहुल्येन प्राप्यन्ते। [4]तेषु हिन्दु-हिन्दी-हिन्दुवी- हिन्दुवानी- हिन्दुकुश- हिन्दसा- हिन्दसाँ- हिन्दुबाना- हिन्दुएचर्ख- हिन्द्मन्द्प्रभृतिशब्दानां विश्लेषणात् विज्ञायते यत् 'हिन्द्शब्दः' मूलतः पारस्यदेशादुद्भवः, अस्यार्थश्च भारतवर्षम्। भारतवर्ष यतो हि पारस्यदेशस्य प्रतिवेशी एवं पारस्यदेशे हिन्दुशब्दस्य प्रयोगः स्वाभाविक एव। पारस्यदेशस्य बलखनगरस्य नाम हिन्दवार्। अस्य समीपस्थस्य पर्वतस्य नाम हिन्दुकुशः, भाषायाः संस्कृतेश्च कृते हिन्दकी भवति। एतेषां शब्दानां प्रयोगात् इदन्तावत्

---

1 श.क.द्रु.भा. 5 पृ. 737

2 तत्रैव

3 हिन्दुधर्मकोश, पृ. 702

निष्कर्षयितुं शक्यते यत् फारसीभाषाभाषिणां कृते 'हिन्द्'शब्दः बहुपरिचित आसीत्। हिन्दुकुशं यावत् विस्तृतस्य देशस्य नाम भारतमासीत्। अपि च डॉ. प्रणवकुमाररायलिखित India my country इति पुस्तकस्य चतुर्थपृष्टाङ्के

**"दक्षिणे यत्समुद्रस्य उत्तरे च हिमालयः।**
**तंदेवनिर्मितं देशं हिन्दुस्थानं प्रचक्षते"**

इत्यस्य श्लोकस्योद्धारः ब्रह्मवैवर्त्तपुराणात् कृत इत्युच्यते। परन्तु स श्लोक उपलब्धे ब्रह्मवैवर्ते पुराणे नैव दृश्यते।[5] यद्वाऽस्तु हिन्दुस्थानं भारतवर्षस्यैव नामान्तरम्। भारतवर्षमिदं पारस्यदेशस्य पूर्वमेव अवस्थितमस्ति। अधुना प्रश्नः जागर्ति हिन्दुशब्दः कस्मादागतः। पारस्यदेशस्य पूर्वस्यां दिशि सिन्धुनदः, तस्य दक्षिणस्यां वामभागे च जालरूपेण नद्यस्तिष्ठन्ति। पूर्वस्यां सिन्धौ मिलिताः नद्यः वितस्ता–परूष्णी–शतद्रुः, पश्चिमस्यां सुवास्तु–कूभा–गोमती च नद्यः भवन्ति। एताभिः षड्भिः नदीभिः आसिञ्चितो प्रदेशः हप्तहिन्दुः सप्तसिन्धुः वा इति उच्यते। अयं शब्दः सर्वप्रथमं पारस्यधर्मग्रन्थे जिन्दाविष्टायां प्राप्यते। पारस्यव्याकरणानुसारं संस्कृतस्य 'स' वर्णः 'ह' इति रूपेण परिवर्तितो भवति। अस्मादेव 'सिन्धु' इति शब्दात् हिन्दुः जातः इत्यनुमीयते। सर्वादौ 'हिन्दु' हिन्द् इत्यत्र वा निवसन्तः हैन्दवः हिन्दुः वा कथिताः आसन्। अनन्तरं गत्वा सम्पूर्णस्य भारतस्य कृते अस्य प्रयोगः जातः। यतो हि भारतस्य परिचमोन्तरैः देशैः साकं सम्पर्कमनेन एव मार्गेण अभवत्। अनेन एवं प्रकारेण व्यापकदृष्ट्या भारतीयानां धर्मः हिन्दुधर्म इति बभूव। पारस्यभाषायां हिन्दुशब्दस्य कृते केचन जुगुप्सावाचकाः अर्था अपि प्राप्यन्ते, यथा– साहसिकाः, सेवकाः, दासाः, प्रतिहारिणः नास्तिकाः (काफिर्) प्रभृतयः। एते शब्दाः नूनमेव जातीयद्वेषकारणात् जाता इति वक्तुं शक्नुमः। अधुना अयमेव प्रश्नः आगच्छति हिन्दु–हिन्दुधर्मावलम्बिनश्च के इति। वस्तुतः भारतस्य निवासिनो जनाः वै हिन्दवः। तेषां च धर्मः हिन्दुत्वमिति। मुस्लिमशासनात् प्राक् सोऽयमर्थः अत्र प्रचलितः आसीत्। रूढिवादिके आधुनिकतावादिके चान्दोलनकालेऽपि सर्वे मिलित्वा हिन्दुत्वं स्वीकृतवन्तः। वैदिकधर्मः देशस्यास्य प्राचीनतमः सुव्यवस्थितधर्मत्वेन च परिगणितो भवति। अयमेव धर्मः आर्येतरानपि प्रभावितं चकारः। अनन्तरमेवात्र जैन–बौद्ध–प्रभृतीनामुद्भवो बभूव। अनन्तरं गत्वा पुनरपि ते अत्रैव समाविष्टाः। अतः सोऽयमार्य –आर्येतर –मुस्लिम –बौद्ध–जैनप्रभृतिभिः सम्पुष्टः धर्मः हिन्दुधर्मः विकासशीलः, उदारवादी, विवेकपूर्णः समन्वयवादी च धर्मो भवति। तिलकमहाभागेन हिन्दु –हिन्दुत्वयोः या परिभाषा प्रदत्ता सा एवात्र संगच्छते। तद्यथा–

**आसिन्धोः सिन्धुपर्यन्ता यस्य भारतभूमिका।**
**पितृभूः पुण्यभूश्चैव स वै हिन्दुरीति स्मृतः॥**

---

4 हिन्दुविधि (हिन्दी), पृ. 1

5 हिन्दीभाषायां 'हिन्दुधर्मकोश' ग्रन्थे लोकमान्यतिलकमहोदयस्य एकश्लोक उद्धृतोऽस्ति। तद्यथा–
आसिन्धोः सिन्दुपर्यन्ता यस्य भारतभूमिका।
पितृभूः पुण्यभूश्चैव स वै हिन्दुरिति स्मृतः।।

हिन्दुविधौ हिन्दुः कः इति प्रश्नस्य समाधानार्थमुक्तं यत् त एव जनाः हिन्दवः ये खलु हिन्दुधर्मं स्वीकुर्वन्ति जन्मतः धर्मान्तरेण वा। [6]यज्ञपुरुषदास विरोधः मूलदासरूपके व्यवहारे भारतस्य सर्वोच्चन्यायालयेन प्रदत्तमनुदेशानुसारं तिलकमहोदयप्रोक्तं व्यावहारिकं सूत्रं स्वीकृतम्। तन्मतानुसारं श्रद्धया वेदस्य स्वीकारः, मोक्षसाधनस्याङ्गिकारः, भिन्नरूपेण- पूज्यदेवतानां गणनप्रभृतिनि हिन्दुधर्मस्य विशिष्टलक्षणानि। वस्तुतः अत्र 'हिन्दु' इति शब्दस्य विशिष्टोऽर्थः नैव उद्भूतः यः व्यक्तिः हिन्दुजीवनशैलीं गृह्णाति अन्यैश्च हिन्दुरीति कथ्यते स वै हिन्दुः।

[7]मनोहरजोशी विरोधः एन्.पी. पाटिलविचारे हिन्दुधर्मः हिन्दुत्वस्य च भिन्नत्वं प्रकटयितुं सर्वोच्चन्यायालयेन निर्धारितं यत् हिन्दुत्वशब्दः सदैव हिन्दुधर्मं न बोधयति। कस्मिंश्चिद् स्थाने ग्रन्थे वा प्रयुक्तस्य हिन्दुशब्दस्य अर्थ विनिश्चेतुं तस्य सन्दर्भशब्दस्य प्रस्तुतीकरणे तत्वं (Material) चापेक्षितं वर्तते। एवं न सर्वत्र वक्तुं शक्यते यत् हिन्दुत्वशब्दः हिन्दुधर्मश्चैव पर्यायभूतः। अतः हिन्दूनां विधिः हिन्दूनां कृते नियमार्थविधयर्वा हिन्दुविधिरेव। विधिशास्त्रविदां मतानुसारं विधिः धर्मस्य इतिकर्त्तव्यताभागो भवति। विधिः स्वयमेव धर्मः। नायं विधिः आष्टिनमहोदयस्य राजनैतिकसमाजसंप्रभुसमादेशनियमानुसारं प्रचलति। वस्तुतो धर्मः संप्रभुतया नैव सिध्यति। न संप्रभुता धर्मं प्रवर्तयति अपितु धर्मेणैव प्रवर्तिता भवति। श्रुतिस्मृत्युदितानां धर्माणां निराजनं प्रजाभिः राज्ञा च कर्त्तव्यम्। अतः [8]हिन्दुविधिः स्मृतीनामेव विधिः। संस्कृतिभाष्यसारसंग्रहव्याख्यानुसारं परम्परातः संशोधिताः अनुपूरिताः ससम्मानं न्यायालये हिन्दूनां कृते व्यवहृताः विधयः हिन्दुविधिरेव।[9] हिन्दुविधिः स्वव्यापकतादृष्ट्या उच्चादर्शत्वेन तर्कपूर्णविश्लेषणकारणात् विधिशास्त्रे प्रमुखं स्थानं गृह्णाति। विधेरावश्यकता लोकानां लाभाय भवति। अतः विधिः समाजिकहितस्य पर्यायवाचको भवति।

हिन्दुविधेः स्रोतांसि बहूनि सन्ति। तेषु श्रुतिः - स्मृतिः - भाष्यानि - न्यायालयीयनिर्णयाः अधिनियमाः-देशाचार-कुलाचारप्रभृतयः भवन्ति। बह्वीसु शाखासु हिंन्दुविधौ याज्ञवल्क्यस्मृतेर्मिताक्षरा-भाष्यानुमोदिताशाखा जीमूतवाहनोक्तादायभागशाखा च प्रमुखे भवतः।

हिन्दुविधौ विचारितेषु विषयेषु पुत्रः दत्तकग्रहणविषयश्च अन्यतमौ भवतः। हिन्दुदत्तकग्रहणाधिनियम 1956 इत्यत्र विषयेऽस्मिन् विस्तृता चर्चा जाता।

प्राचीनेषु सर्वेषु शास्त्रेषु प्रायशः पुत्रप्राप्तये लोकानां चेष्टा वर्णिताऽस्ति। वंशस्य धारा यथा अविच्छिन्ना स्यात् इति धिया अन्त्येष्टिश्राद्धप्रदानार्थं च पुत्रस्यावश्यकता वर्तते। [10]"आत्मा वै पुत्र नामासि" [11]"पुंनामनरकात् त्रायते इति पुत्रः" अनेनैव प्रकारेण बहूनि वचनानि अर्थवादत्वेनास्य प्राशस्त्यं प्रतिपादयन्ति। वेदेषु "अनन्तो तस्य विश्वः यस्याऽस्ति पुत्रः, अर्थात् न तस्य समाजे किमपि स्थानं वर्तते

---

6. यज्ञपुरुषदास वनाम मूलदास ए.आई.आर. 1966. एस.सी. 1919
7. ए.आई.आर. 1996, एस.सी. 796, पृ. 812 (हिन्दुविधौ)
8. हिन्दु विधि (हिन्दी) पृ. 14
9. मेन हिन्दु ला एण्ड यूसेज, पृ. 1
10. पा.गृ.सू. 1/18/2

यो न पुत्रवान्" इत्येवं प्रकारेण ऋगपि उपलभ्यते। याज्ञवल्क्यानुसारं वंशस्य अविच्छिन्नधारायै अस्मिन् लोके परलोकमोक्षार्थञ्च पुत्र-पौत्रप्रपौत्राणामस्ति एव महती आवश्यकता। अतस्तज्जनयित्र्यः स्त्रियः अपि सेव्याः भवन्ति। उक्तञ्च-

**[12]लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।**
**यस्मात्तस्मात्स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिताः।। इति**

पुत्रस्यावश्यकतां प्रदर्शयन् भगवता मनुना उक्तं यत् पुत्रेण वै विश्वविजयिनो भवन्ति लोकाः। पौत्रेण चामरत्वमवाप्यते, प्रपौत्रेण पुनरादित्यलोकमवाप्यते। उक्तञ्च मनुना –

**[13]पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।**
**अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्।।**

अपि च-

**[14]पुंनाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः।**
**तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा।।**

पारस्कराचार्येण "आत्मा वै पुत्रनामासि स जीवः शरदः शतम्" (पारस्करगृह्यसूत्र 1-18-2) इत्येवं प्रकारेण प्रतिपादयन् पुत्रस्य महत्त्वं प्रतिपादितम्। वस्तुतः पुंलग्नात् पञ्चमस्थानं जन्मकुण्डल्यां पुत्रभावं दर्शयति, अतः पुत्रस्य पञ्चमस्थानत्वं निर्दिष्टं वर्तते। पुत्रस्थेऽर्के नरोऽसौ प्रथमसुतहतः, सिंहराशौ सुपुत्रः इत्यादि पुत्रसम्बन्धे ज्योतिस्तत्ववचनान प्राप्यन्ते। "पुनाति पित्रादीनिति पुत्रः" पू धातोः "पुवो ह्रस्वश्च" इति सूत्रेण क्त प्रत्यये कृते धातोह्रस्वत्वञ्च इति अनेन प्रकारेण पुत्रशब्दस्य निष्पत्तिर्भवति। पुंनामनरकात् त्रायते इति पुत्+त्रै+डुः इत्येवं रूपेण पुत्रः इति शब्दो निष्पद्यते। पितॄन् पाति इति व्युत्पत्या पुषोदरादित्वात् इति साधुः।

आदिकविना वाल्मिकिमहर्षिणा पुत्रस्य महत्वं प्रतिपादयितुमुक्तं यत्–

**[15]पुंनाम्नो नरकात् यस्माद् पितरं त्रायते सुतः।**
**तस्मात् पुत्र इति प्रोक्तः पितॄन् यःपाति सर्वतः।।**

पुंसन्तानः, पुन्नामनरकत्राता, आत्मजः, तनयः, सूनुः, सुनः इत्येतस्य पर्यायवाचकाः शब्दाः। भाषायां च 'बेटा' इत्युच्यते। भगवता मनुना पुत्रस्य महत्वं प्रतिपादयितुं पुनरपि उक्तं यत् इदन्तावत्

11. मनु. 9/138
12. या. स्मृ. 1/78
13. मनु. 9/137
14. मनु. 9/138
15. रामायणम् 2/7/12
16. हिन्दुविधि (हिन्दी), पृ. 141

पुत्रहीनस्य परमं कर्त्तव्यं यत् स यं कमपि प्रकारकं पुत्रं गृह्णीयात् इति [16]हिन्दुविधौ उट्टङ्कितमस्ति। सोऽयं श्लोकांशः अयमस्ति यत्–

"अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः।" इति। वस्तुतः श्लोकोऽयं मुद्रिते मनुस्मृतौ[17] नोपलभ्यते।

अपि च–

**[18]पितृणामनृणो जीवन् दृष्ट्वा पुत्रमुखं पिता।**
**स्वर्गी स तेन पुत्रेण तस्मिन् सन्यस्त (संन्यस्त) तदृणः॥**

तत्रैव ज्येष्ठपुत्रस्य प्रशंसापरकं वचनं दृश्यते। तद्यथा–

**[19]अग्निहोत्रं त्रयोवेदा यज्ञाश्च शतदक्षिणाः।**
**ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीम्॥**

मनुरपि–

**[20]ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।**
**पितॄणानृणश्चैव स तस्मात्सर्वमर्हति॥**

कालिकापुराणे–

**[21]पुंनाम नरकं पुत्रविहीनः परिपश्यति।**
**न तपोभिर्न धर्मेण तन्मोचयितुमीश्वरः॥**

**केवलात् पुत्रजननात् मोक्षस्तस्मात् प्रजायते॥**

तथा च–

**[22]पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुस्तु नैरयः।**
**तत्र वै त्रायते यस्मात् तस्मात् पुत्र इति स्मृतः॥**

अत्र तावत् ज्येष्ठः विशिष्टगुणयुक्तश्चेत् तज्जातस्य मुखदर्शनं नरकनिस्तारकम्। विष्णुपुराणे–

---

17. तत्रैव
18. दायभागधृतं शंखलिखितवचनम् (दा.भा. जीवानन्दसंस्करणः, पृ. 161)
19. तत्रैव
20. मनु. 9/106
21. कालिकापुराणात् Ch. 89 v.v.II-12ab
22. दायभागधृतं हारीतवपचनं व्यवस्थादर्पणाख्ये आङ्ग्लोनिबन्धे धर्माधिकरणकार्यपरिचायके च पुस्तकेऽस्ति, पृ. 823-825 इत्यत्रोद्धृतोऽयं श्लोकः अपि च "पुन्नामनरकाद्यस्मात्.... "इति मनु. 9/138

**स तु पुत्रेण जातेन वेणोऽपि त्रिदिवं गतः।**
**पुन्नाम्नो नरकात् त्रातः सतेन सुमहात्मनः।।** इति।

एवं प्रकारेण पुत्रस्य प्रशंसा वहुषु स्थलेषु उपलभ्यते।

**पुत्रस्य भेदः–**

भगवता मनुना पुत्रस्य भेदसम्बन्धे उल्लिखितं यत् पुत्रस्य द्वादशभेदास्सन्ति। तेषु षड्दायादबान्धवाः षडदायादबान्धवाः। ते यथा–

**[23]औरसः क्षेत्रजश्चैव दत्त-कृत्रिम एव च।**
**गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट्।।**

अपि च–

**[24]कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा।**
**स्वयंदत्तश्च शौद्रश्च षड्दायादबान्धवाः।।**

याज्ञवल्क्यस्मृतौ पुत्रिकापुत्र-द्यामुष्यायणपुत्रयोः विषये चर्चा दृश्यते। मनुस्तु [25]**"एक एव औरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।"** इत्युक्तत्वात् औरसपुत्रस्य महत्त्वं वरीवर्ति। परन्तु दैववशात् औरसपुत्राभावे दत्तकपुत्रस्य ग्रहणं कर्तुं शक्यते। साम्प्रतिके काले औरसपुत्राभावे दत्तकपुत्रग्रहणमपि विधीयते। प्राचीनेषु स्मृतिशास्त्रेषु यद्यपि विषयेऽस्मिन् बाहुल्येन चर्चा दृश्यते, तथापि तदाधारेण वर्तमाने काले वर्तमानानां हिन्दुजनानां कृते दत्तकपुत्रपरिग्रहे विधिनिर्दिष्टो वर्तते। स च विधिः हिन्दुविधौ 1956 दत्तकपुत्रग्रहणविधिरूपेण ज्ञायते। केषुचित्सु स्थलेषु प्रवक्तृणामाचार्याणां मतानि अत्र सन्निविष्टानि वर्तन्ते। केचन च नियमाः नूतनरूपेण सामाजिकविधिविन्यासार्थं समाविष्टाः दृश्यन्ते। हिन्दुविधौ औरसदत्तकान् त्यक्त्वा अन्ये सर्वविधाः पुत्राः निरस्तीकृताः वर्तन्ते। कलियुगीयस्य पराशरस्य मतानुसारं चत्वारो वै पुत्राः भवन्ति। ते यथा–

**[26]औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः। इति**

अन्ततो गत्वा पुराणानुसारं हिन्दुविधौ औरसदत्तकयोर्ग्रहणं पुत्रत्वेन कृतं दृश्यते। तद्यथा–

[27]**"दत्तौरसः इतरेषां न तु पुत्रत्वेन परिग्रहः।"**

तर्हि विधौ तावत् वैधप्राकृतिकरूपेण जन्मितपुत्रः अवैधप्राकृतिकरूपेण जन्मितपुत्रयोर्मध्ये भेदः स्पष्टीकृतः। अन्ततो गत्वा त्रिविधा वै पुत्रा इति परिदृश्यन्ते। वैधः औरसपुत्रः, अवैधपुत्रः, दत्तकपुत्रश्चेति।

---

23. मनु. 1/159
24. मनु. 1/160
25. मनु. 1/163
26. परा.स्मृ. 4/24

विवाहितायाः पत्नीसकाशात् स्वौरसात् जातपुत्रः वैधपुत्रः औरसपुत्रो वा इति उच्यते। भारतीयसाख्याधिनियम 1872 इत्यस्य धारा 112 इत्यत्र वैधतायाः प्रकल्पना कृता वर्तते। तन्मतानुसारं पित्रोर्विवाहानन्तरं जातः पुत्रः, विवाहविच्छेदस्य अष्टोत्तरद्विशतदिवसाभ्यन्तरे जातः पुत्रः, अविवाहिताभ्यां मातृपितृभ्यामुत्पन्नः पुत्रश्च इति वैधपुत्राः। अत्र प्रसङ्गेऽस्मिन् इदमेव विशेषरूपेण उक्तमस्ति यत् यदि कदाचित् एवं प्रमाणयितुं नैव शक्यते यद् अविवाहितावस्थायां सत्यां एताभ्यां मिलने तावदासीत् काचिद् बाधा इति; एतासु अवस्थासु जाता सर्वे वै पुत्राः औरसपुत्राः भवन्ति। हिन्दुविवाहअधिनियम 1958 इत्यस्य धारा 16 इत्यत्र पुत्रप्रसंगे न केवलं पुत्रस्य ग्रहणं कृतमपितु कन्याया अपि ग्रहणं वर्तते।

**दत्तकग्रहणस्यार्थः–**

भगवता मनुना दत्तकस्य लक्षणं प्रतिपादयितुमुक्तं यत्–

**[28]माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।**
**सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः॥**

अनेन प्रकारेण एकपरिवारजातस्य पुत्रस्य दानमपराय परिवाराय भवति। दानन्तु मातापितृभ्यां मात्रा पित्रा वा पित्राज्ञया मात्रा वा कर्तुं शक्यते। ग्रहीतुर्परिपारे दत्तकपुत्रः जन्मितपुत्रवत् भवति। सर्वेषु शास्त्रेषु इदमत्र ऐकमत्यं यत् दत्तकपुत्रः दत्त एव। हिन्दुविधौ दत्तकपुत्रस्य परममुद्देश्यं धार्मिकमिति लिखितमस्ति। बौधायनानुसारं अहं त्वां धार्मिककर्मणां पूर्त्तये गृह्णामि। पूर्वजानां परम्परारक्षायै अत्र पुत्रग्रहणं प्रचलितमासीत्। (बौधा. धर्म.सू. 11/7-19) प्राचीनहिन्दुविधौ दत्तकग्रहणस्य संकल्पना वस्तुतः वृद्धावस्थायां रक्षार्थं श्राद्धकर्मसम्पादनार्थं दायग्रहणार्थं च प्रचलिताऽऽसीत्। अनन्तरं गत्वा धार्मिकमुद्देश्यं गौणमभवत्। दत्तकमीमांसायां यद्यपि दत्तकग्रहणं श्राद्धतर्पणसंस्कारानुष्ठानार्थं कर्त्तव्यमिति उक्तमस्ति तथापि साम्प्रतिके काले सुरक्षा महत्त्वपूर्णं स्थानं धत्ते। डा. पी.एस. सेनमहोदायानां मतानुसारं दत्तकग्रहणस्य पक्षद्वयं वर्तते धार्मिकपक्षं सामाजिकपक्षञ्च। धार्मिकपक्षानुरं श्राद्ध- तर्पण- अन्त्येष्टिप्रभृतयः आगच्छन्ति। सामाजिकपक्षे दायग्रहणं सुरक्षा चान्तर्भवतः।

**वर्तमानहिन्दुविधौ दत्तकग्रहणस्य प्रकल्पनम्-**

हिन्दुदत्तकग्रहण–प्रतिपोषणाधिनियम 1956 इत्यस्य निष्पत्तिकाले विधानमण्डलेन दत्तकग्रहणस्य धार्मिकपक्षस्योपरि विचारः कृतो वर्तते। तन्मतानुसारं एकां कन्यामपि दत्तकत्वेन ग्रहीतुं शक्यते, यद्यपि सा श्राद्धप्रदाने अन्त्येष्टिकार्ये च समर्था असमर्था वा विचारसापेक्षा भवति। अत्र तस्याः ग्रहणकर्तुर्परिवारस्य धाराया अग्रेसारणे स्वोत्तरदायित्त्वमस्ति। उपबन्धोऽयं न कस्यापि धार्मिकस्य पक्षस्य समर्थनं करोति। अत्र केवलं दानस्य ग्रहणस्य च महत्त्वम्।

---

27. हिन्दुविधिः, पृ. 142
28. मनु. 9/168

दत्तकविषये प्राचीनेषु धर्मशास्त्रेषु मनुवसिष्ठ–बौधायन–शौनक– शाकल–नन्दपण्डितप्रभृतीनां मतानि सादरमद्यापि गृह्यन्ते। वर्तमानहिन्दुविधौ दत्तकग्रहणविधेर्संशोधनमपि कर्त्तव्यमिति आधुनिकतावादीहिन्दूनां मतम्। रूढीवादीविचारधारया सह विरोध एवास्य कारणम्। षड्पञ्चाशदुत्तरैकोनविंशतितमे ख्रिष्टाब्दे दिसम्बरमासस्य एकविंशतितारिकायामधिनियमस्यास्य प्रवर्तनं जातम्। यद्यपि इतः प्राक् जनरल्क्लाजेज्एक्ट चतुर्नवत्युत्तराष्टादशशततमवर्षस्य धारापञ्चदशे विषयेऽस्मिन् चर्चा कृता आसीत्, तथापि नूतनोऽयं विधिः विस्तृत एव।

**अत्र नूतने विधौ परिवर्तनानि–**

1. एकां कन्यामपि दत्तकत्वेन ग्रहीतुं शक्यते। (धारा 7-8)

2. एका कुमारी, विवाहविच्छेदयुक्तानारी, विधवा च दत्तकग्रहणेऽपि अधिकारिण्यः भवन्ति। स्थलविशेषेषु पत्न्याऽपि अधिकारो वर्तते। (धारा 8)

3. एकः पुरुषः स्वपत्न्याः पत्निनां वा सम्मत्या दत्तकं ग्रहीतुं शक्नोति। (धारा-7)

4. परिस्थितिविशेषं त्यक्त्वा पिता मातुर्सम्मतिं बिना बालकं दातुं नैव शक्नोति। (धारा- 9)

5. दत्तस्य पुत्रस्य कन्यायाः वा आयुः न्यूनातिन्यूनपक्षे पञ्चदश, अविवाहितश्चायं भवेत्। अननुमत्या न दत्तकग्रहणं कुर्यात्। (धारा-10)

6. होमानुष्ठानं नावश्यकम्। (धारा-11)

7. पूर्वसम्बन्धस्य सिद्धान्तः (Relation Back) अत्र निरस्तीकृतः। दत्तकग्रहणदिनादेव दत्तपुत्रस्य अस्तित्वं गृहीतमस्ति। दत्तकग्रहणकारणात् न पिता नापि माता सम्पत्तिहस्तांतरणे अनधिकारी वञ्चितो वा भवेत्। (धारा-13)

8. पञ्जीकरणस्य आवश्यकता वर्तते अत्र। (धारा-16)

9. दत्तकग्रहीतुर्दत्तकयोर्मध्ये आयोर्व्यवधानमकविंशतिवर्षं भवितव्यम्।

10. ग्रहीतुर्दत्तकस्य च जाति एका एव भवितव्येति न। परन्तु हिन्दु एव इत्यत्र नियमो भवति।

**दत्तकग्रहीतर्योग्यता–**

प्राचीनमतानुसारं दत्तकग्रहीता हिन्दुत्वेन हिन्दुः भवितव्यः। सः पुरुषः भवितव्यः। दत्तकग्रहीत्रोर्मध्ये निकटतमं सापिण्ड्यं भवितव्यम्। सः सजातीयः भवितव्यः, शारीरिकविकलाङ्गः न भवितव्यः। पितृमातृहीनस्य दत्तके अनधिकारः। एकपुत्रस्य नाम केवलपुत्रस्य दत्तकेऽनधिकारः। उक्तञ्च शौनकेन–

[29]नत्वेकं पुत्रं दद्यात् प्रतिगृह्णीत वा"।

---

29. दत्तकमीमांसा, पृ. 78

ज्येष्ठपुत्रस्य दत्तकेऽनधिकार:, पूर्वदत्तस्य पुनर्दत्तकेऽनधिकार:, अवैधपुत्रस्य दत्तके अनधिकार:, द्वाभ्यामेकस्य दत्तकग्रहणकर्तुं नैव शक्यते। एवमेव प्रकारेण अन्येऽपि च नियमा: दत्तके अधिकारं स्थापयन्ति।

आधुनिकहिन्दुविधानानुसारं यद्यपि दत्तकप्रसङ्गे बह्वी चर्चा समुपलभ्यन्ते तथापि प्राचीनानां मतानामनुकरणेन एव एतेषां प्रासङ्गिकता वर्तते। आधुनिके स्वतन्त्रे राष्ट्रे सार्वदेशिकसर्वजनादरनिमित्तञ्च हिन्दुविधेरूत्पत्ति:। अत: अस्य पालनं कर्त्तव्यमेव।

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठे
नवदेहल्याम्।

# संस्कृतसाहित्ये गीतिकाव्यम्

डॉ. रश्मि मिश्रा

"यदि संसार का सर्वाधिक आनन्द प्राप्त करना है। तो उसे कवि की आँखों से देखो, समझो और अपनाओ" रवीन्द्रनाथठाकुरमहोदयस्य अनया उक्त्या स्पष्टं प्रतीयते यत् कविदृष्टिः असाधारणप्रतिभासमन्विता भवति। सामान्यजनाः विश्वस्य भौतिकस्वरूपं गृह्णन्ति। कविस्तु विश्वं रसदृष्ट्या पश्यति। येन सः भौतिक-संसारादतिरिच्य रसमयमानन्दं प्राप्नोति। अतएव कविः स्वकीयवैदग्धप्रतिभया वर्ण्यविषयमित्थं व्यनक्ति यत् सः आह्लादसमन्वितोऽलौकिकचमत्कारं प्रददानन्दानुभूतिं कारयति। यथा- काव्यारम्भस्तु वैदिककालादेवास्ति। तथैव संगीतकलाऽपि वैदिककालादेव समाजे स्थिताऽस्ति। 'संगीतम्' न केवला कला अपि तु जीवनेन साकं तस्य सम्बन्धोऽपि वर्तते एव। यतो हि प्राचीनकालादेव मानवजीवने संगीतकलायाः स्थानं विशिष्टरूपेण अस्त्येव।

प्रत्येककलायाः उद्देश्यं भौतिकसंसारमतिक्रम्य अलौकिकतायाः प्राप्तिरस्ति। मानवो यदि संगीतस्य मधुरझङ्कृतिमात्मसात् करोति तर्हि दिव्यमात्मसुखं प्राप्तुं शक्नोति।

'रसो वै सः' इति न्यायेन ब्रह्मणः रसवत्तैव संगीतमस्ति। संगीतमाध्यमेन मानवाः स्वीयसुखदुःखानि प्रकटीकुर्वन्ति। येन ते मानसिकरूपेण शान्तिं प्राप्नुवन्तः प्रफुल्लित भवन्ति। हरिवंशपुराणे लिखितमस्ति यत्-

"नृत्यसंगीतवादित्रद्वारा स्वस्य मनोरञ्जनं कृत्वा मनुष्यः आनन्दानुभूतिं करोति[1]।"

उपनिषत्सु मृत्योरनन्तरं यत्स्वर्गसुखस्य च वर्णनमुपलभ्यते तत्सर्वं संगीतज्ञैरत्रैवास्मिन्नेव जीवने अनेनैव वपुषा प्राप्यते। आनन्दाश्चानुभूयते[2]।

गीतिकाव्य खण्डकाव्यस्यैव अङ्गमस्ति।

खण्डकाव्यं महाकाव्यस्यैकदेशानुसारि भवति। अस्य काव्यप्रभेदस्येतिहासः कदा आरभते इति चिन्तायाम् ऋग्वेदकाल एव खण्डकाव्यस्य बीजमुत्पन्नमिति सविश्वासं वक्तुं शक्यते। मनोहारिणी उष सूक्ते, वीररसप्रधाने विपाशाशुतुद्रीसूक्ते सुदासविजय सूक्ते च खण्डकाव्यस्य प्राक्रूपं निहितमिव प्रतीयते-

---

1. हरिवंशपुराणम्-59-20
2. चित्तैश्चित्तहरैर्दिर्मानुषैश्च समन्ततः।
   नृत्यसङ्गीतवादित्रैर्भूतलेऽपि प्रभूयते।। (??)

**अभ्रातेव पुंस एति प्रतीची गर्त्तारूमिव सनये धनानाम्।**
**जायेव पत्ये उशती सुवासा उषा हस्त्रेवनिरिणीते अप्सः।।[3]**

इयं उषः सुन्दरो भ्रातृहीना भगिनीव स्वदायभागाय पितृस्थानीयं सूर्यमुपतिष्ठते कदाचिच्च पतिं प्रेमपाशे बन्धुमध्यवसिता सुन्दरपरिधानासुन्दरीव सूर्यस्य समीपमायाति। अत्र एवं विधेऽत्र च मन्त्रसमुदाये यदाख्यानजातं निहितं तत्खण्डकाव्यमिदं रूपं मन्तुं शक्यत एव। कालिदासेन तु मेघदूतर्तुसंहारौ प्रणीय खण्डकाव्यपरम्परायाः शिलिन्यास इव कृतः। अग्रवाल महोदयाः खण्डकाव्यस्यपञ्चप्रकारकतायातिष्ठन्ते-

1. ऋग्वेदकालिक खण्डकाव्यम्। अत्र खण्डकाव्यानुकारैः सूक्तैर्ऋषयोऽव्याजमालात्म-भावान् व्यञ्जयामासुः, यथोषसूक्तादिषु।

2. भक्तिरसमयं खण्डकाव्यम्। यस्यप्रभेदस्य निदर्शनानि बौद्धग्रन्थेषु, उपनिषत्सु च प्राप्यन्ते।

3. ऐतिहासिकं खण्डकाव्यम्। अस्य प्रभेदस्योदाहरणं रामायणे भारते वा कृतं प्रकृतिवर्णनं बोध्यम्।

4. रूपकान्तर्गतं खण्डकाव्यम्। रूपकेषु यत्र तत्र पात्राणां वस्तुवर्णनपराणि प्रेमप्रकाशन-पराणि वा पद्यानि एतदुदाहरणतया स्वीकर्त्तुं शक्यन्ते।

5. उत्तरकालभवानां कवीनांश्रृंगारप्रधानं सङ्कीर्णं खण्डकाव्यम्।

एषु पञ्चसु प्रभेदेषु पञ्चमः प्रभेदः एव सर्वोत्कर्षं गतः कालिदासामरुकभर्तृहरि जगन्नाथादिभिरस्य प्रभेदस्य साहित्यमूर्जितं कृतम्। अन्ये प्रभेदा बीजभावेन स्थिता अपि पोषकसाहित्याभावात्सुप्तकल्पा एव। इदमेव खण्डकाव्यमत्याधुनिकाः गीतिकाव्य (स्लतपब) इति नाम्ना व्यपदिशन्ति। अत्र गीतिकाव्यप्रभेद एव दूतकाव्यमुक्तककाव्यवर्णनप्रधानकाव्या- न्यायान्ति, तेन खण्डकाव्यनामाऽयं प्रकारो मेघदूतर्त्तुसंहारगीतगोविन्दभर्तृहरिशतकत्रयामरुक-भल्लटशतकभामिनीविलासादीन् अन्यानि दूतकाव्यानि च अङ्गीकरोति।

संस्कृतसाहित्ये गीतिकाव्यस्य द्वौ भेदौ स्तः। मुक्तगीतिकाव्यं, प्रबन्धात्मकगीतिकाव्यं संदर्भरहितं भवति। यतो हिं मुक्तकगीतिकाव्यस्य रसास्वादनाय प्रकरणस्यावकस्मकता नास्ति। आचार्यराजेन्द्रमिश्रेण खण्डकाव्यं परिभाषितम्-

**कस्यचित्पुरुषार्थस्य वर्णनन्तु यदांशिकम्।**
**जीवनास्याथवा नेतुः खंण्डकाव्यं तदुच्यते।।**

**खण्डकाव्यमिदञ्चैव स्वेतिवृत्तानुरोधतः**
**विविधान्यभिधानानि पृथगर्थानि गच्छति।।**

3.

अन्यापदेशकाव्यं तत्प्रवृत्याऽन्योक्तिनिष्ठया।
गीतिकाव्यं तदेवोक्तं गीतितत्वप्रयोगतः॥[4]

गीतिकाव्यं यथा अभिराजराजेन्द्रमिश्रप्रणीतं 'गीतभारतम्'। यथा वा राधावल्लभ- प्रणीतं 'गीतधीवरम्' भट्टमथुरानाथशास्त्रिप्रणीता 'गीतिवाणी' पुल्लेरामचन्द्रप्रणीतो 'गीताञ्जलिः' अमीरचन्द्रशास्त्रिप्रणीता 'गीतिकादम्बरी' रूद्रदेवत्रिपाठीकृता 'गीतिगङ्गा' विरूरचिदम्बरजोइस कृतं 'गीतरामायणम्' नृपतिरामभट्टकृतं 'गीतगिरीशम्, वीरेन्द्रकुमारभट्टाचार्यकृतं 'गीतगौराङ्गम्', श्रीधरभास्करवर्णी कृता संस्कृतगीतमालेति, हरिदत्तशर्मकृता गीतकन्दलिका, अभिराजराजेन्द्रप्रणीता 'वाग्वधूटीमृद्वीका', श्रुतिम्भरामत्तवारणी-शालभञ्जिकाः, पुष्पादीक्षितकृताऽग्निशिखा, हरेकृष्णमेहेरकृता भाट्टगीतिकाञ्जलिः, जनार्दनमणिप्रणीता निस्यन्दिनी च।

आचार्यराधावल्लभेनोदितम्-
जीवनस्यैकदेशनिरूपकं खण्डकाव्यमिति॥[5]

आचार्यराजेन्द्रप्रसादमिश्रमहोदयेन 'गीतं काव्यस्यात्मेति[6]' निश्चितम्। तेन उदितम्-

यच्च गीतिषु समाख्येत्युक्तमासीत्पुरातनैः।
तेनैव गीतितत्त्वस्य महत्त्वं धुरिसंस्थितम्॥

देवानपि समर्थं यत्प्रीणितुं लयमूर्च्छनैः।
गीतमेव तदेकं यन्नृत्यवाद्यसमन्वितम्॥

मद्भक्ता यत्र गायन्ति तत्राऽहमिति नारदम्।
सान्त्वयत्येव गीतायां भगवान्नन्दनन्दनः॥

न तथा व्यञ्जनैस्तृप्तिर्यथा हि चषकाम्भसा।
ननु धर्माभितप्तस्य पथिकस्याभिजायते॥

तथैव रसिकस्यापि महाकाव्यानुशीलनात्।
जायते न तथाऽऽनन्दो यथा गीतेन तत्क्षणम्॥

अलंकाररसौचित्यध्वनिवक्रोक्तिरीतिभिः।
तस्मादलं यतो गीतं काव्यस्यात्मेति निश्चितम्॥

अलंकारादयस्सर्वे कल्लोला इव चञ्चलाः।
उद्भवन्ति विलीयन्ते सन्ततं गीतसागरे॥

तस्मादद्यतने काव्ये गीतमेव महीयते।
अमन्दानन्दसन्दोहस्त्रोतस्त्वादधिसंस्कृतम्॥

---

4. अभिराजयशोभूषणम्, पृ.सं. 224
5. अभिनव. (3.1.4)
6. अभिराजयशोभूषणम्- 247 पृ.

गीतिर्गीतञ्च गेयञ्च गानमेतेन्मिथस्समम्।
प्रत्ययाच्छब्दवैभिन्न्यं न पुनर्धातुयोगतः॥

कविकालिदासमहोदयेन उदितम-
गीतिर्भवति रागस्य सन्ततं परिवाहिणी।
गेयं विरचितपदं गोत्राङ्कञ्च भवेत्पुनः।
वक्ति विद्योत्तमाजानिरित्यपि क्वचिदन्यतः॥

आचार्यशूद्रकमतानुसारेण-

रक्तं स्फुटं समञ्चैव मधुरञ्च मनोहरम्।
भावान्वितं भवेद्गीतं ललितञ्चेति शूद्रकः[7]॥

आचार्यराजशेखरमतानुसारेण-

गीतिषु सामाख्येति राजशेखरः यत् सामयति तोषयति देवानिति साम। साम्नां वेदस्सामवेदः। साम्नि यद्देवतोषकरं तत्त्वं तद्गीतमेव[8]।

अतः काव्यस्य संयोगः संगीतेन साधर्मं भवेच्चेत् रमणीयाभिव्यक्तिः वर्णनातीता भविष्यति। यस्य स्थानं सर्वोत्कृष्टं भविष्यति। रागरागिण्योः आविष्कारः कालेन तयोः संबंधः, हृदि तस्य प्रभावोत्पादिका शक्तिः एतेषां समेषाम् अनुभवं सोऽपि कर्तुं शक्योति यः संगीतशादवं न जानाति यतोहि कविना यद्भावस्य रसस्य वा संचारः क्रियते। स्वीयप्रतिभयैव श्रोतॄणाम् हृदि रसस्य संचारः क्रियते।

'गीतिः' इत्यस्य आत्मा भावातिरेको भवति। कविना स्वीयरागात्मकानुभूत्या कल्पनया च वर्ण्यविषयं भावात्मकरूपेण सम्पाद्यते।

यदा कविः स्वीयहृदये सुखदुःखयोः तीव्रानुभवं करोति। तदा स स्वकीय रागात्मिकामनुभूतिं हार्दिकभावनया सार्धम् अभिव्यनक्ति।

तथा च एतान् भावान् स्वीयानुभूत्या परकीयानुभूत्यां परिवर्तनाय याः मधुरभावसमन्विताः युक्तीः प्रयुनक्ति। तदेव गीतिकाव्यं व्यवह्रियते। अलङ्कारशास्त्रानुसारेण काव्यनिर्भाणाय रसात्मकताया एव प्रामुख्यमस्ति तथापि गीतिकाव्येषु भावानामपि प्रधानतापेक्षते। भावात्मकतां विहाय गीतिकाव्यं भवितुम् नार्हति।

प्रायः गीतिकाव्येषु विषयवर्णनन्तु अल्पीयो भवति। तेषु गीतिकाव्येषु हृदि स्थितानां भावानां वर्णनं सुन्दररीत्या मनोहरैः शब्दैः क्रियते।

गीतिकाव्येषु विषयप्रतिपादनमुद्देशं नाऽस्ति। यदा-कदा तस्यावेशः इयत्क्षणिको भवति यत्सम्पूर्णाभिव्यक्तिः एकस्मिन्नेव पदे कर्तुम् उत्सहते।

---

7. काव्यमीमांसा
8. अभिराजयशोभूषणम्

भावेष्वपि एकस्य प्राधान्यमावश्यकम् भवति। प्रधानरूपभावस्य भावान्तरैः सह संयोज्य काव्यस्य समृद्धिः परिपुष्टताञ्च विद्यन्ते। सामान्यरूपेण गीतिरित्यस्यार्थः गानम् इति स्वीक्रियते। यत्रश्रृंगार-गायनवादनानां प्राधान्यं विद्यते। किन्तु अत्र गीतिपदेन कश्चन विशिष्टोऽर्थः ग्राह्यः। यथा हृदिस्थरागात्मकभावानां छन्दोमयी अभिव्यक्तिः गीतिकाव्येषु रागात्मकतायाः ध्वन्यात्मकतायाश्च महत्वं तथैवास्ति यथा धूमे वह्नेः वर्तते। अत्र गेयात्मकता तु भवितव्या किन्तु एतादृशी पद्यमयी रचना भवेत् या कवेः आत्मानुभूतेः निःसृता स्यात्। डॉ. ओझामहोदयानुसारेण-

काव्यं संगीतञ्च पृथक् पृथक् अभिव्यक्तयः सन्ति। काव्यं स्वस्याभिव्यक्तये संगीतं न वाञ्छति। तथैव संगीतं स्वस्य प्रदर्शनाय काव्यसाहाय्यं नापेक्षते तथापि उभयोरेकत्रीकरणं कलादृष्ट्या उत्कृष्टाभिव्यक्तिं धारयति। येन गीतिकाव्यस्य मधुरता वर्धते।

एतत्तत्वसमन्वयादेव गीतिकाव्यम् उत्कृष्टकाव्यमिति मन्वते जनाः।

Music when combined a pleasurable idea is poetry, music without idea is simple music, idea without the music is pruse from its very defimatic[9]

अतएव मानवजीवनस्य कस्यचिदेकस्य पक्षस्योद्घाटनं अहोस्वित् अन्तरात्मनः भागस्य चित्रणं गीतिकाव्यस्य प्रतिपाद्यविषयो भवति। तस्य आकारप्रकारौ महाकाव्यात् सूक्ष्मौ भवतः। विशेषतः तत्र एकस्यैव विषयस्य वर्णनं भवति। श्रृंगारिकः धार्मिकः आहोस्वित् नैतिकः। गीतिकाव्येषु लालित्यमाधुर्ययोः भवति विशिष्टस्थानं अतएव गीतिकाव्यं महाकाव्यात् अधिकं जनेभ्यः रोचते। हृदयस्य संगीत-तान-लयप्रधानस्वर एव गीतिरित्युच्यते। आशयमेनं प्रदर्शयन् हिन्दी साहित्यस्य कविना सुमित्रानन्दपन्तेन युक्तमभिहितम्-

**वियोगी होगा पहला कवि, आह से निकला होगा गांन।**
**उमड़कर नयनों से चुपचाप बही होगी कविता अनजान।।**

संस्कृतवाङ्मये गीतिकाव्यस्यारम्भः ऋग्वेदे दृश्यते। यत्र सुखदुःखयोः हृदयस्पर्शि चित्रणं गीतिकाव्यरूपेण निस्सृतम्। विविधदेवगुणानां मार्मिकवर्णनं मन्त्रद्वारा अभवत्।

वैदिकगीतिकाव्येषु वसिष्ठवामनयोः सूक्तम्, अक्षसूक्तम्, उषासूक्तम् इत्यादयः सन्ति। रामायणमहाभारतयोरपि अनेकेषु स्थलेषु गीतितत्त्वानि सन्ति। यथा- पतिवियुक्तां सीतां प्रति प्रेषितो भगवतः रामस्य सन्देशवाहकः अञ्जनापुत्रः। दुर्योधनं प्रति धर्मराजयुधिष्ठिर- द्वारा प्रेषितो भगवान् कृष्णः, दमयन्तीं निकषा प्रेषितोनलस्य संदेशवाहको हंसः, अस्यामेव परम्परायामागच्छन्ति[10] श्रीमतभागवतपुराणस्थानि गीतान्यपि अतीव लोकप्रियाणि सन्ति। यत्र रसाप्लावितायाः भावनायाः चिह्नानि संस्कृतस्य गीत्या सुन्दराणि दृश्यन्ते। स्वातन्त्र्येण गीतिकाव्यानामारम्भः महाकविकालिदासविरचितं मेघदूतं नामककाव्यादभवत्। काव्यमिदं संस्कृतसाहित्ये उज्ज्वलरत्नमिव चकासते। लौकिकगीतिकाव्यस्य विकासः कालिदासस्य मेघदूतात् स्वीक्रियते। संस्कृतसाहित्ये गीतिकाव्यस्य द्वौ भैदो स्तः। मुक्तगीतिकाव्यं प्रबन्धात्मकगीतिकाव्यं सन्दर्भरहितं भवति। यतो हि

9. संस्कृत के महाकवि और काव्य- डा. रामजी उपाध्याय एवं रामगोपाल मिश्र

मुक्तकगीतिकाव्यस्य रसास्वादनाय प्रकरणस्यावश्यकता नास्ति। मुक्तकं रसभरितं मोदकमिव आस्वाद्य सहृदयहृदयं तृप्तं भवति। मुक्तककाव्यस्य प्रवर्तकाः एते कवयः समभवन्। प्रबन्धात्मकस्य गीतिकाव्यस्य प्रवर्तकः कालिदासः। गीतिकाव्यस्य सुमधुर-पदविन्यासः, संगीतमयं वृत्तं हठादेव जनानाकर्षयति। शृंगार-वैराग्य-दृष्ट्या यथैवास्य बाह्यस्वरूपं सुन्दरं भवति। तथैव कोमलभाव विन्यासेन आभ्यन्तर-स्वरूपमपि अभिरामतां भजते। गीतिकाव्ये नारीसौन्दर्यस्य यादृशं स्वाभाविकं चित्रं प्राप्यते न तादृशमन्यत्र कुत्रापि।

गीतं न केवलं देवानां मानवानां च तोषकरमपितु पशुपक्षिमृगादिनामपि चेतोहरं तत्त्वम्। आहितुण्डिकस्तु मधुकरीवाद्यलयैः फणिनं भृशं नर्तयन् स्ववशी करोति। वन्यगजा वीणानादसम्मोहिता निगृह्यन्ते। किरातगीतवाद्यवशीकृतचेतना मृगा विततां वागुरामपि न पश्यन्ति।

नृत्यवाऽसमन्वितं तदेव गीतं सङ्गीतं तौर्यत्रिकं वाऽप्युच्यते। नृत्यं गीतं च वाद्यञ्च त्रितर्य सङ्गीतमुच्यते यथा वा तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिति त्रयमित्यतरः।

गीतं गानमिमे समे इत्यमरः। तद्वदेव गीतिर्गेयं वाऽपि गीतसाम्यं बिभर्ति। कविकुलगुरु कालिदासविरचिते अभिज्ञानशाकुन्तलनाम्नि नाटके पञ्चमाङ्के हंसपदिकाया गीतम् आकर्ण्य दुष्यन्तः सप्रशंसं कथयति-

'अहो रागपरिवाहिनी गीतिरिति। तेन रागपरिवाहित्वमेव गीतिवैशिष्ट्यं प्रतिभाति।

तत्रैव नाटकारम्भे सूत्रधारो नटीं ब्रूते-

**तवास्मि गीतरागेण हारिणा प्रसभं हृतः।**
**एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा।।**[11]

अत्रापि गीतरागस्य वैशिष्ट्यं प्रसह्य चित्तहारित्वमेव प्रोक्तम्। तस्माद् गीतम्महीयते स्वेन चेतोहरेण गीतरागेणैवेति स्पष्टम्।

मेघदूतेऽपि यक्षिणीवीणावादनप्रसङ्गे कालिदासो गेयवैशिष्ट्यं प्रतिपादयति-

**उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां**
**मदग्रोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।**
**तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चि**
**द्भूयोभूयः स्वयमपि कृतां मूर्च्छना विस्मरन्ती।।**

अत्र मम गोत्रं नामेति मदगोत्रं तदेवाऽङ्कश्चिह्नं वैशिष्ट्यं यस्य तद्गेयं मदगोत्राङ्कम्। वस्तुतो नायकं प्रति नायिकया नायिकां प्रति नायकेन च गीयमाने गेये गोत्राङ्केन स्वाभिप्राय प्रकाशनेनावश्यमेव भवितव्यम् यथा दुष्यन्त प्रति लिखिते गेयात्मके स्वमदनलेखे शकुन्तला-ऽत्माभिप्रायं प्रकाशयति-

---

10. व्रजभारती, मथुरा, 2014 वि.

11. अभिज्ञानशाकुन्तलम्-1/5

तव न जाने हृदयं मम पुनः कामो दिवाऽपि रात्रावपि।
निर्घृण! तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि॥[12]

अत्र शकुन्तलायाः स्वाभिप्रायनिवेदनमेव तद् गोत्राङ्कत्वम् तथा गेयं भवति विरचितपदम्। मृच्छकटिकंप्रकरणेऽपिरेभिलगीतं प्रशंसन् नायकश्चारुदत्तो गीतवैशिष्ट्यान्याख्याति।

रक्तञ्च नाम मधुरं च समं स्फुटञ्च
भावान्वितञ्च ललितञ्च मनोहरञ्च।
किंवा प्रसादवचनैर्बहुभिर्मदुक्तै
रन्तर्हिता यदि भवेद् वनितेति मन्ये॥[13]

मेघदूते महाकविना विरहियाक्षस्य मनोव्यथायाः वर्णनम् अत्यन्तमार्मिकदृष्ट्या कृतम्। यत्र प्रतिपद्यं रागस्य विवशता व्याकुलतायाश्च दर्शनं भवति। विरहसम्पन्नो यक्षः प्रतिवस्तु स्वभार्यामेव पश्यति।

प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरःसा।
सा सा सा सा जगति सकले कोऽयमद्वैतवादः॥

विरहावस्थासु नायकनायिकाश्च अतिभावनिमग्नाः भवन्ति। तथा च आभिः भावनाभिः हृदयस्य वेदनां समाजसमक्षं प्रस्तुवन्ति। यथा- मेघदूतग्रन्थे कविः स्वान्तरभावैः तया सह मेलनं कांक्षते। किन्त्वत्र नायिकाः स्वानुकूलयितुं चित्रनिर्माणं करोति। तेन स्वप्रियायाः चित्रं पूर्णं तु कृतम् किन्तु यदा तच्चरणयोः स्वपतनं चित्रीयते तदा तस्य नेत्राभ्याम् अश्रुधारा निर्गच्छति। यतो भावविहीनो देवः तयोः मेलनं चित्रेऽपि न द्रष्टुमिच्छति।

इदमेवास्ति कवेर्वैलक्षण्यम्। यत् स स्वयं भावातिरेकः सन् अन्येषु भावान् उत्पादयति। तथा च आनन्दस्यानुभूतिं कारयति। तथा च संगीतस्य धारा चिरस्मरणीया करोति।

त्वामालिख्य प्रणयकुपितां धतुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्त्रैस्तावन्मुहुरुपचितैदृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः।[14]

गीतिकाव्यस्य रत्नान्तरम् महाकविः जयदेवकृत "गीतगोविन्दम्" नामकं काव्यमस्ति। यद्यपि सर्वमिदं काव्यकोटौ नायाति यतोहिऽच चरितं न वर्ण्यतेऽथापि वर्णनपरकखण्डकाव्यत्वमस्य स्वीकर्त्तव्यमेव। कचिदाधुनिकास्तु गीतगोविन्दं गीतिनाट्यं मन्यन्ते, यथाहि मेक्डोनेल

12. अभिज्ञानशाकुन्तलम् 3/14
13. मृच्छकटिक 3/4
14. उत्तरमेघदूत-44,

मिव लक्ष्यते बहिरम्यन्तरयोश्चास्य जीवने भक्तिरस एव केवलं दृश्यते।
गीतगोविन्दस्य मधुरता संस्कृत भारत्याः पराकाष्ठेव प्रतीयते।

महोदयः-

The transitional stage between pure lyric and pure drama a lirical drama though dating from the twelfth century is the earliest literary of primitive lyre of play that still survives in Bengal and must have preceded the regular drama. The poem contains no dialogue in the proper sense.

अर्थात् गीतगोविन्दं शुद्धगीतिकाव्यशुद्धनाट्ययोरन्तरे वर्त्तते, यद्यपीदं द्वादशशताव्द्यां निरमीयत, तथापीदं पक्वतामुपयातं नाट्यस्योदाहरणस्वरूपतया प्रथमं निदर्शनं मन्तव्यम्, यदीया परम्परा वङ्गेषु सम्प्रत्यपि जीवति। इदं शुद्धनाट्यस्यानुगामि मन्तुं शक्यते यद्यपि संवादोऽत्र नास्ति।

गीतगोविन्दस्य द्वादशापि सर्गाः गीतमयाः। सरसमधुरकवितायाः पराकाष्ठाऽत्र निदर्शिता।

यत्र श्रीकृष्णस्य विभिन्नानां क्रीडानां वृत्तं वर्तते। केचिज्जनाः काव्यमिदं 'संगीतरूपकम्' इति स्वीकुर्वन्ति। अन्ये च श्रृंगारमहाकाव्यम् इति वदन्ति। अस्य मुख्यवैशिष्ट्यम् इदमस्ति यत् अत्र पद्यैः साकम् संगीतनृत्यसम्बन्धी रागतालयोः नाम्ना उल्लेखोऽस्ति।

अत एव प्राचीननृत्यसंगीतसम्बन्धिग्रन्थेषु अस्य विशिष्टस्थानं विद्यते। अत्र राधाकृष्णयोः प्रणयव्यापारस्य वर्णनमस्ति। अतः काव्यमिदं भक्तिकाव्यम् इत्यपि भक्ताः व्यवहरन्ति। जयदेवस्य जीवनम् आनन्दकन्दव्रजचन्द्रस्य परिपूर्णकाव्यसंगीतयोर्मेलनेन, कलात्मक एवं सौन्दर्यसमन्वितेन गीतिकाव्येषु स्थानमस्य विशिष्टं वर्तते। अत्र भारतीयसौंदर्यतायाः मधुरता- यश्च पराकाष्ठा दृश्यते। येन असंस्कृतज्ञा अपि प्रभाविता भवन्ति।

**रतिसुखसारे, गतमभिसारे मदनमनोहरवेशम्**
**न कुरु नितम्बिनि गमनविलम्बनमनुसर तमं हृदयेशम्**
**धीरेसमीरे यमुनातीरे वसति वने वनमाली**
**पीनपयोधरपरिसरमर्दनचंचलकरयुगशाली॥**[15]

इत्यादिना गीतानि सरसकविताया असमानि निदर्शनानि। न केवलं गीतीनर्माणेऽपि तु पद्यनिर्माणेऽपि परप्रौढिरत्र प्रकाशिता-

**अत्रान्तरे च कुलटाकुलवर्त्मपातसञ्जातपातक इव स्फुटलाञ्जनश्रीः।**
**वृन्दावनान्तरमदीपयदंशुजालैर्दिक्सुन्दरीवदनचन्दनविन्दुरिन्दुः॥**

प्रायः जनाः मन्यन्ते, गीतिकाव्यस्य रचना श्रृंगाररसे एव संभवाति। प्रेमानुरागिषु हृदये ये भावाः उत्पद्यन्ते त एव संगीतमाध्यमेन बहिरागच्छन्ति। नैतिकतासम्बन्धिकाव्यम्

उपदेशात्मकं भवति। तथा च उपदेशाः स्वीयभावानां स्फोरणे असमर्थाः भवन्ति। आचार्यभर्तृहरिः मानवानाम् उदात्तगुणाध्ययनाय उपदेशं प्रददाति स्वीयनीतिशतके ते च

---

15. गीतगोविन्दम्, जयदेव

गुणाः मंगलप्रदायकाः सन्ति। तद्दृष्टौ त एव सज्जनपदभागिनस्सन्ति। यैः अपरस्थितां परमाणुसमं गुणमपि पर्वतरूपमिव मन्यन्ते। तथा च सन्तोषः अनुभूयते।

**परगुणपरमाणून् पर्वतीकृत्य नित्यम्।**
**निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥**[16]

अत्र नीतिविषयकगुणानां सन्निवेशः आन्तरिकभावैः साकमस्ति। यः अत्यन्त हृदयवर्धकतत्वैः समन्वितोऽस्ति। यथा–

**यां चिन्तयामि सततं मयि सा विरक्ता**
**साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।**
**अस्मत्कृतेषु परितुष्यति काचिदन्या,**
**धिक् तां च तं च मदनं च इमां च माम् च॥**[17]

रागस्य अन्तर्जालस्थितेऽपि स्वात्मदर्शानाय भावाभिव्यक्तिः वर्तते। अत्यन्तम् उपदेशात्मकं वाक्यमस्ति। यत् धिक् तां च ते च मदनं च इमां च मां च इति। एतावदेव नास्ति अपि तु सरल–सरसपदावल्याम् एतादृशाः अनेके श्लोका सन्ति। ये च जनाः कण्ठस्थीकृत्य व्यवहरन्ति।

तद्यथा--

**साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः।**
**तृणं न खादन्नपि जीवमानः तद्भागधेयं परमं पशूनाम्॥**

गीतिकाव्येषु स्तोत्रकाव्यानां गणनाऽपि आयाति। काव्यान्येतानि धर्ममयानि सन्ति देवताविशेषस्य स्तुतयः सन्ति अतएव अतिप्रसिद्धानि सन्ति समाजे। अनुरागविरागभाव- समन्वितानि स्तोत्रकाव्यानि अनेकानि सन्ति। आध्यात्मिकदृष्ट्या एतेषां प्रचारः प्रसारः समाजे अत्यधिकोऽस्ति। एतानि धार्मिकदार्शनिकोभयभावसमन्वितानि सरसहृदयाकर्षकानि भवन्ति। प्रतिधर्मं भक्ताः स्वोद्गारं भगवतः समक्षं प्रकटयितुं निर्मलभावानां अभिव्यक्तिं शब्दमाध्यमेन कुर्वन्ति। एतैः गुणमयैः शब्दोद्गारैः स्तोत्रस्य या उत्पत्तिर्जायते। सा चित्तं द्रवीभूतं करोति। तथा च संगीतसम्मिश्रणेन अस्य प्रभावः इतोऽप्यधिको भवति।

शिवस्तोत्रं भवेत् आहोस्वित् वैष्णवस्तोत्रं कविः स्वीयभक्तिसाधनाम् अन्तःप्रेरणया प्रतिभया च रसभावयुक्तं कृत्वा संगीतमाधुर्येण श्रोतृणाम् मनः आकर्षति। "भजगोविन्दम्"

शिवस्तोत्रम् इत्यादीनि स्तोत्रकाव्यानि प्रमाणतया दृश्यन्ते–

**भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते।**
**प्राप्ते सन्निहिते तव मरणे नहि नहि रक्षति डुकृञ् करणे॥**

---

16. नीतिशतकम्
17. नीतिशतकम्–42

बालस्तावत् क्रीडासक्तस्तरुणस्तावत् तरुणींरक्तः।
वृद्धस्तावत् चिन्तामग्नः पारे ब्रह्मणि कोऽपि न लग्नः॥[18]

इत्थम् संस्कृतस्य उपर्युक्तशृंगारिकम् एवं धार्मिकं गीतिकाव्यादतिरिक्तमपि अन्येषां गीतिकाव्यानाम् परम्परा निर्बाधगत्या साम्प्रतमपि प्रवाहमाना वर्तते। यत्र प्रमुखानि गीतिकाव्यानि निम्नाङ्कितानि सन्ति।

महाकविकालिदासविरचितं ऋतुसंहारं, महाकविभर्तृहरिप्रणीतम् "वैराग्यशतकम्" महाकविघटकर्परस्य "नीतिसार, कविवरामरुकप्रथितम् "अमरुकशतकम्", कविमयूरस्य "सूर्यशतकम्" विल्हणस्य "चौरपंचाशिका" कविभल्लटस्य "भल्लटशतकम्" कविश्रेष्ठधोयिनिर्मितम् "पवनदूतम्" गोविंदाचार्यस्य "आर्यासप्तशती", महाकविपण्डित राजजगन्नाथकृत "भामिनीविलासः", गंगालहरी, सुधालहरी, करुणालहरी एवं लक्ष्मीलहरी, कविवररूपस्वामिविनिर्मितम् "हंसदूतम्", एवञ्च उद्धवसन्देशः" इत्याख्यानि अनेकानि उत्कृष्टानि गीतिकाव्यानि सन्ति येषां नामोल्लेखोऽपि दुरुहः।

संस्कृतभाषाया गीतिकाव्यानि स्वकीयपरिमाणं बिना गुणैः सम्पन्नानि भवन्ति। गीतिकाव्यं गुणदृष्ट्या अपूर्वं हृदयस्पर्शि च भवति। शैल्या तत्र मनोरमता ध्वन्यात्मकता च तिष्ठति भावनायाः व्यापकतापि भवति। काव्यमिदं प्रेमकामुकतां यावत् सीमितं नाऽस्ति। अपि तु लौकिकं धार्मिकम्, उपदेशात्मकं काव्यमपि अस्यां परिधौ आगच्छति। भारतीयगीतिकाव्यस्य प्राचीनता तथैवास्ति यथा वेदस्य। यतो हि वैदिकमन्त्रेषु सर्वप्रथमं रागात्मकस्य समावेशोऽस्ति। ऋग्वेदस्थ-उषसूक्तस्य मन्त्रा गीतात्मकाः सन्ति। सामवेदस्थ मन्त्रेषु उदात्तानुदात्तस्वरिताख्येषु स्वरेषु गीतिकाव्यस्य तत्त्वानि निहितानि सन्ति।

अतः प्रतीयते यत् प्रथम शताब्दी ई. पूर्वादारभ्य एकोनविंशतशताब्दी यावत् संभवतः द्विसहस्त्रात्मके काले विशालतमगीतिकाव्यानां सर्जनं जातम्। यत् उत्कृष्टं भावपूर्णं कलात्मकञ्चास्ति।

18. शिवमहिम्नस्तोत्रम्

# साहित्यशास्त्रे प्रमाणविमर्शः, प्रमाणानामलङ्कारत्वसाधनञ्च

डॉ. सुमनकुमारझा

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।[1]

न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।
जायते यन्न काव्याङ्गमहो भारो महान्कवेः।।[2]

वस्तुतः सर्वाणि शास्त्राणि, सर्वा विद्याः कलाश्च, सर्वे शब्दा अर्थाश्च काव्याङ्गतया निरूप्यन्ते कविभिः। काव्येषु एतेषां तत्त्वानां प्रचुरप्रयोगोऽपि दृश्यते। अत एतेषां तत्त्वानामवबोधाय, साधुप्रयोगाय च तत्तच्छस्त्राणां ज्ञानमपेक्षितमस्ति, कविभ्यः, काव्यसमीक्षकेभ्यः, सहृदयसामाजिकेभ्यश्च।

शोधपत्रस्यास्य त्रयः प्रभागाः सन्ति, तत्र प्रथमे प्रभागे शास्त्रकाव्ययोरन्तःसम्बन्धः प्रमाणविमर्शश्च; द्वितीये प्रभागे प्रत्यक्षप्रमाणसन्दर्भे बौद्धमतखण्डनं, तृतीये च प्रभागे साहित्यशास्त्रदृशा प्रमाणानामलङ्कारत्वसाधनञ्चेति निरूपिताः सन्ति।

**प्रथमः प्रभागः**—साहित्यशास्त्रे विशेषतः दोषनिरूपणक्रमे, अलङ्कारनिरूपणप्रसङ्गे च प्रमाणमुद्धृतमस्ति। यथा नाट्यशास्त्रे चित्राभिनयनिरूपणप्रसङ्गे प्रतिपादितं भरतमुनिना—

लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्।
लोकाध्यात्मपदार्थेषु प्रायो नाट्यं व्यवस्थितम्।।[3]

इत्थं भरतमुनिना त्रिविधं प्रमाणं स्वीकृतम्-लोको वेदस्तथाध्यात्मम्। तत्रापि लोकस्य विशिष्टं महत्त्वं निगदितं तेन। यथा—

अन्येऽपि लोकतो ये ते सर्वे लोकतः साध्याः।
नोक्ता येऽपि तु तेऽप्यत्र लोकाद्ग्राह्यास्तु पण्डितैः।।[4]

तदध्यात्माभिसंभूतं छन्दः शब्दसमन्वितम्।
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं त्विदम्।।[5]

---

1. नाट्यशास्त्रम्, 1/116
2. काव्यालङ्कारः, भामहप्रणीतः 5/4
3. नाट्यशास्त्रम्- 25/122
4. नाट्यशास्त्रम्- 25/118, 121
5. नाट्यशास्त्रम्- 25/123

**यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः।**
**लोकधर्मप्रवृत्तानि नाट्यमित्यभिसंज्ञितम्।।**[6]

**नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्।**
**तस्माल्लोकप्रमाणं हि ज्ञेयं नाट्यं प्रयोक्तृभिः।।**[7]

वस्तुतः काव्येषु लोकप्रमाणस्य महत्त्वं सर्वथा ग्राह्यमेव, यतो हि काव्यं लोकाश्रितं भवति। अतएव नाट्यशास्त्रे द्विविधा परम्परा स्वीकृता,- लोकधर्मीपरम्परा नाट्यधर्मी परम्परा च। नाट्यं लोकानुसारेण शास्त्रानुसारेण च प्रवर्तते। यथा-"लोकशास्त्रानुसारेण तस्मान्नाट्यं प्रवर्तते।[8]

भामहाचार्यः काव्यालङ्कारे कथयति-

**अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम्। शब्दहीनं यतिभ्रष्टं भिन्नवृत्तं विसन्धि च देशकालकलालोकन्यायागमविरोधि च। प्रतिज्ञाहेतुदृष्टान्तहीनं दुष्टं च नेष्यते।।**[9]

तत्र न्यायविरोधिनः यथा-

**न्यायः शास्त्रं त्रिवर्गोक्तिर्दण्डनीतिञ्च तां विदुः।**
**अतो न्यायविरोधीष्टमपेतं यत्तथा यथा।**[10]

यत्रैतेषां विरोधो दृश्यते तत्र न्यायविरोधिदोषाः भवन्ति। तत्र उदयनवासवदत्तयोरुपाख्यानेन न्यायविरोधस्य नैकान्युउदाहरणानि प्रदर्शितानि भामहाचार्येण।[11]

तत्र भामहाचार्यः लोकशास्त्रयोर्महत्त्वमित्थं निगदति-

**नमोऽस्तु तेभ्यो विद्वद्भ्यो येऽभिप्रायं कवेरिमम्।**
**शास्त्रलोकावपास्यैवं नयन्ति नयवेदिनः।।**[12]

वस्तुतः प्रतिज्ञाहीनं-, हेतुहीनं, दृष्टान्तहीनञ्चेति ये दोषाः निरूपिता आचार्येण, तत्रैव प्रमाणस्याप्युल्लेखः प्राप्यते। यथा च-

**अथ प्रतिज्ञाहेत्वादिहीनं दुष्टञ्च वर्ण्यते। समासेन यथान्यायं तन्मात्रार्थप्रतीयते। प्रायेण दुर्बोधतया शास्त्राद्भिभ्यत्यमेधसः। तदुपच्छन्दनायैष हेतुन्यायलवोच्चयः।।**[13]

---

6. तत्रैव, 25/127
7. तत्रैव, 25/129
8. तत्रैव, 5/165
9. काव्यालङ्कारः (भामहः), 4/1, 2
10. तत्रैव, 4/39
11. तत्रैव, 4/40, 41, 42, 43, 44
12. तत्रैव- 4/46
13. तत्रैव- 5/1, 2

यदा कविः काव्यनिर्माणे प्रवृत्तो भवति तदा सः प्रजापतिः। यथा–

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते।।**

तथापि प्रसङ्गानुकूलं यदि कुत्रापि प्रमाणस्योल्लेखः जायते चेत् तज्ज्ञानमावश्यकम्, नो चेत् कथं तस्यावबोधः। अपि च स विषयः सदोषो निर्दोषो वा इत्यस्यापि निर्धारणं कथं स्यात् तज्ज्ञानं विना। कान्तासम्मिततयोपदेशेन समन्वितेषु शास्त्रस्यापि उपयोगः क्रियते। यथा–

**स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुज्यते।**
**प्रथमालीढमधवः पिबन्ति कटुभेषजम्।।**[14]

काव्यं लोकाश्रितं शास्त्राश्रितञ्च भवति। यथा–

**तज्ज्ञैः काव्यप्रयोगेषु तत्प्रादुष्कृतमन्यथा।**
**तत्र लोकाश्रयं काव्यमागमास्तत्त्वदर्शिनः।।**[15]

तत्र शास्त्रकाव्यस्य कृते शास्त्रीयतत्त्वानां ज्ञानमपेक्षितमस्ति। यतो हि काव्यं कलाश्रितं शास्त्राश्रितञ्च भवति। यथा च प्रतिपादयति भामहाचार्यः–**कलाशास्त्राश्रयञ्चेति चतुर्धा भिद्यते पुनः।**[16]

आचार्य राजशेखरेणापि निगदितं काव्यमीमांसायाम्–

**"सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानम्।" इति यायावरीयः। गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च तद्धि शास्त्राण्यनुधावति। आन्वीक्षिकीत्रयीवार्तादण्डनीतयश्चतस्रो विद्याः' इति कौटिल्यः। "पञ्चमी साहित्यविद्या" इति यायावरीयः। सा हि चतसृणामपि विद्यानां– निष्यन्दः।"**[17]

तत्र कविः त्रिधा इति कथयति राजशेखरः–"शास्त्रकविः काव्यकविरुभयकविश्च। उपकार्योपकारकभावं तु मिथः शास्त्रकाव्ययोरनुमन्यामहे। तत्र त्रिधा शास्त्रकविः। यः शास्त्रं विधत्ते, यश्च शास्त्रे काव्यं संविधत्ते, योऽपि काव्ये शास्त्रार्थं निधत्ते।"[18]

अनेन ज्ञायते यत् काव्येषु शास्त्रीयतत्त्वानां सन्निवेशो जायते एव।

---

14. तत्रैव, 5/3
15. तत्रैव, 5/33
16. काव्यालङ्कारः, 1/17
17. काव्यमीमांसा, द्वितीयोध्यायः, पृ.
18. तत्रैव, पञ्चमोऽध्यायः, पृ.

अतः काव्येन सह शास्त्रस्य विलक्षणः सम्बन्ध इति निश्चप्रचम्। अतएव प्रमाणज्ञानमपि। अपेक्षितमेव, यथा च कथयति आचार्यभामहः–

**सत्त्वादयः प्रमाणाभ्यां प्रत्यक्षमनुमा च ते।**
**असाधारणसामान्यविषयत्वं तयोः किल॥**[19]

प्रमीयते वस्तु साध्यतेऽनेनेति प्रमाणम्। 'प्र' उपसर्गपूर्वक 'मा' धातोः करणे ल्युट प्रत्ययः। प्रमाकरणं प्रमाणमित्यर्थः। प्रत्यक्षमेव प्रमाणमिति चार्वाकाः। प्रत्यक्षमनुमानञ्चेति बौद्धाः। प्रत्यक्षमनुमानमुपमानमिति वैशेषिकाः। शब्दोऽपीति नैयायिकाः। अर्थापत्तिरपीति भाट्टाः। अनुपलब्धिरपीति अद्वैतवादिनः। एवमेतेऽन्येऽपि ऐतिह्यादयः प्रमाणभेदाः सन्ति। ते च सर्वे दर्शनान्तरेषु संख्यालक्षणगोचरफलविषयतया विप्रतिपत्त्या निरूपिताः सन्ति। यथा हि प्रत्यक्षादिलक्षणे विवादः तथा प्रत्यक्षसंख्यानां तद्विषये तत्फलेऽपि विवादो दृश्यते।

**द्वितीयः प्रभागः–**

सौगताः द्विविधं प्रमाणमङ्गीकुर्वन्ति, प्रत्यक्षमनुमानञ्च। प्रत्यक्षस्य विषयोऽस्ति व्यक्तिः, अनुमानस्य च जातिः, अर्थात् प्रत्यक्षेण व्यक्तिः ज्ञायते, अनुमानेन च जातिः। सामान्यमुच्यते जातिः।

"जातिर्जातञ्च सामान्यम्" इति अमरकोशः–1-4-3। सामान्यस्यापि तदेवार्थः यः साधारणस्य। अतः सामान्यं साधारणं, जातिरिति पर्यायरूपः।

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। लिङ्गपरामर्शजन्यं ज्ञानमनुमानम्। प्रकारान्तरेण–यद् वस्तु पुरतः दृश्यते तज्ज्ञानं प्रत्यक्षप्रमाणस्य विषयः, यत्परोक्षमस्ति तज्ज्ञानमनुमानेनैव, इति नियमेनैव बौद्धाः व्यशक्तिः प्रत्यक्षप्रमाणविषयः, जातिश्च अनुमानविषय इति स्वीकुर्वन्ति। तत्र प्रत्यक्षलक्षणमस्ति–

**प्रत्यक्षं कल्पनापोढं ततोऽर्थादिति केचन।**
**कल्पनां नामजात्यादियोजनां प्रतिजानते॥**[20]

कल्पना बौद्धदर्शनस्य पारिभाषिकशब्दोऽस्ति, यस्यार्थः नाम–जाति–गुण–क्रिया–द्रव्याणां पञ्चोपाधिनां व्यक्तौ आरोपः। यथा चोक्तं धर्मकीर्तिना– **"कल्पनापोढमभ्रान्तं प्रत्यक्षम्।"**[21]

कल्पनारहितं भ्रान्तिहीनञ्च ज्ञानं प्रत्यक्षमिति। भामहाचार्येण अस्मिन् प्रत्यक्षलक्षणे विप्रतिपत्तयः प्रदर्शिताः– तत्र प्रथमा विप्रतिपत्तिः–

---

19. काव्यालङ्कारः, 5/5
20. काव्यालङ्कारः, 5/6
21. न्यायबिन्दुः, पृ. 8

**समारोपः किलैतावान्सदर्थालम्बनञ्च तत्।**
**जात्याद्यपोहे वृत्तिः क्व-क्वविशेषः कुतश्च सः।।**[22]

जाति-गुण-क्रियादीनां सत्ता एव नास्ति, अत एतेषां प्रत्यक्षं कथमिति बौद्धानां मतम्। अत्र भामहाचार्यः कथयति-यथार्थवस्तुनः ज्ञानमेव प्रत्यक्षम्, जाति-गुण-क्रियादीनां न शक्यते प्रत्यक्षीकर्तुं कल्पनारूपत्वात् (अयथार्थत्वात्ः) इति बौद्धानां य आशयः तन्न साधुः। जात्यादीनां निषेधे सति कस्यापि वस्तुनो ज्ञानं कथं संभवम्, उपाधिनां निषेधे सति द्वयोः वस्तुनोः पार्थक्यज्ञानं कथं स्यात्। (ञ्चेति प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकञ्चेति विकल्पशब्दोऽत्र भेदवाचकः। यत्र विकल्पः तत् सविकल्पकं यत्र विकल्पाभावः तत् निर्विकल्पकम्। किमपि वस्तु अस्ति इति बोधः निर्विकल्पकंज्ञानं, परं किमस्ति इत्यस्य बोधः सविकल्पकज्ञानम्, अत्र द्वयोर्मध्ये पार्थक्यं ज्ञायते उपाधिचतुष्टयबलात्। जाति-गुण-क्रिया-यदृच्छेति उपाधिचतुष्टयम्।

वस्तुतः प्रत्यक्षज्ञानमुपाधिभिरेव क्रियते, जात्यादयः न स्वीक्रियन्ते चेत् ज्ञानस्य विषयः कः, अर्थात् कस्य ज्ञानम्? पुनः अपरेण वस्तुना साकं किं पार्थक्यमपि च पार्थक्यस्याधारः कः? इत्यत्र बौद्धानां मतं समुचितं नास्ति इति।

**द्वितीया विप्रतिपत्तिः**-बौद्धमतखण्डनाय द्वितीया युक्तिर्उपस्थाप्यते भामहाचार्येण-

**तदपोहेषु च तथा सिद्धा सा बुद्धिगोचरा।**
**अवस्तुकं चेद्वितथं प्रत्यक्षं तत्त्ववृत्ति हि।।**

यदि जात्यादीनामपोहे सत्यपि तेषां बुद्धिगोचरत्वमपि च।

प्रत्यक्षं निर्विषयकमिति स्वीकृत्य कल्पनारूपमिति कथयन्ति, तदपि न साधु, यतो हि बौद्धाः यथार्थबोधकाः सन्ति। पुनराचार्येण तृतीया युक्तिर् उपस्थाप्यते यथा-

**ग्राह्यग्राहकभेदेन विज्ञानांशो मतो यदि।**
**विज्ञानमात्र सादृश्याद्विशेषोऽस्य विकल्पना।।**[24]

यदा ज्ञानमेव ग्राह्यं ग्राहकञ्चापि स्यात् तदा द्वयोर्मध्ये पार्थक्यमेव न स्यात्, परं तत्र पार्थक्यं भवति। अतः ज्ञानस्य भिन्नस्वरूपत्वात् तत्र एकेनज्ञानेन सह अपरज्ञानस्याभिन्नत्वे लोकव्यवहारः बाधितस्वरूपः। अतः तथ्यमिदं न समीचीनम्।

सन्दर्भेऽस्मिन् तुरीया युक्तिर् उपस्थापिता भामहाचार्येण बौद्धमतखण्डनाय-यथा-

---

22. काव्यालङ्कारः, 5/7
23. काव्यालंकारः, 5/8
24. तत्रैव. 5/9

**अर्थादेवेति रूपादेस्तत एवेति न्यायतः।**
**अन्यथा घटविज्ञानमन्येन व्यपदिश्यते।।**[25]

सिद्धान्तोऽयं यत् कस्यापि वस्तुनः ज्ञानं तेन वस्तुना एव जायते। यथा पदार्थ ज्ञानं घटेन एव, पटपदार्थेन घटज्ञानं न जायते। अतः रूप-आकार-जाति-गुण-क्रिया-यदृच्छादीनामुत्पतिरपि तेन एव पदार्थेण स्वीकर्त्तव्या। नो चेत् घटज्ञानमन्येन वस्तुना व्यपदिश्यते। यथा पुष्पज्ञानं फलेन न जायते तद्वदेव। अन्यथा गजं दृष्ट्वा उष्ट्रस्य बोधो भविष्यति। वृक्षं दृष्ट्वा कश्चित् कथयेत् यत् घटमहं पश्यामि। गोषु अश्वस्य बोध इत्यादि। इत्थं सिद्धमिदं यदुपाधिविशिष्टव्यक्तिरेव प्रत्यक्षस्य विषयः न तु उपाधिरहितव्यक्तिः, यथा बौद्धाः स्वीकुर्वन्ति।

निरूपितन्यायसिद्धान्तस्य काव्येषु उपयोगप्रदर्शनाय कथयति भामहाचार्यः-

**अपरं वक्ष्यते न्यायलक्षणं काव्यसंश्रयम्।**
**इदन्तु शास्त्रगर्भेषु काव्येष्वभिहितं यथा।।**[26]

आचार्यदण्डिनापि सन्दर्भेऽस्मिन् उच्यते-

**देशकालकलालोकन्यायगमविरोधि च।**
**इति दोषाः वर्ज्याः काव्येषु सूरिभिः।।**[27]

सत्यमिदं यत् काव्यं तदैवोत्तमं भवति यदा तत्र देशकालकलालोकन्यायागमौचित्यानां निर्वाहः क्रियते। एतेषामनौचित्यवशात् काव्यं हृद्यं ग्राह्यं च न भवति। यतो हि- **अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।**

नाट्यशास्त्रस्याभिनवभारतीटीकायां महामहेश्वराचार्याभिनवगुप्तपादाचार्येणापि काव्येषु प्रमाणस्य प्रतिपादनं कृतमस्ति। यथा-"**लोकसिद्धानि प्रत्यक्षानुमानागमप्रमाणानि-लोकशब्देनोच्यन्ते**। वेद इति तु यथास्वं नियतरूपो लोकप्रसिद्धोऽप्यागमो यथा न्यायेषु धनुर्वेदः स्वरतालादौ गन्धर्ववेद इत्यादि। अध्यात्मं तु संस्थं वेदनं वेदाध्यात्माभ्यां प्रमिता ये पदार्थाः तेषु नाट्यं प्रतीतमित्यत्र हेतुमाह वेदाध्यात्मोपपन्नं त्विति। तुर्हेतौ। समन्वितमिति भावे। एतदुक्तं शब्दसमन्वयो व्याकरणाभिधानेनागमेन सिद्धः। छन्दसमन्वयस्तु स्वसंवेदनेन। एतच्चागमस्ववेदनयोः प्रमोपलक्षणमात्रं। **न हि लोकप्रसिद्धिमपह्नोति कश्चित्समर्थः।**"[28]

---

25. तत्रैव, 5/10
26. काव्यालङ्कारः, (भामहः), 5/30
27. काव्यादर्शः, 3/126
28. अभिनवभारतीटीका- पृ, 27, नाट्यशास्त्रम्-25/120 यथा- लोकोवेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्। लोकाध्यात्मपदार्थेषु प्रायो नाट्यं व्यवस्थितम्।।" एतस्याः कारिकायाः व्याख्यायामभिनवगुप्ताचार्यस्य कथनमिदम्।

अतः काव्येषु लोकशास्त्रयोर्महत्त्वं सर्वथा स्वीकरणीयमेव।

**तृतीयः प्रभागः—साहित्यशास्त्रदिशा प्रमाणानामलङ्कारत्वसाधनम्**—साहित्यशास्त्रे अलङ्कारत्वेन प्रमाणानि विवेचितानि सन्ति। यथा—नाट्यशास्त्रस्य षोडशाध्याये षट्त्रिंशल्लक्षणेषु हेतुसंशयदृष्टान्तार्थापत्तयः निरूपितास्सन्ति।[29] तत्रार्थापत्तेः लक्षणमपि निरूपितमस्ति यथा—

**अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते।**
**वाक्यमाधुर्यसंयुक्तं सार्थापत्तिरूदहृता।।[30]**

रुद्रटाचार्येण स्वग्रन्थे काव्यालङ्कारे अनुमानालङ्कारस्य निरूपणं क्रियते यथा—

**वस्तु परोक्षं यस्मिन्साध्यमुपन्यस्य साधकं तस्य।**
**पुनरन्यदुपन्यस्येद्विपरीतं चैतदनुमानम्।।[31]**

अर्थात् साध्यं परोक्षं वस्तु यत्र प्रथममुपन्यस्य पुनस्तस्य साधकं हेतुं कविरूपन्यस्येत्तदनुमानमलंकारः। तथापि विपरीतं चेति पूर्वं साधकोपन्यासः पश्चात्साध्यनिर्देशो यत्र तच्चानुमानम्। यथोदाहरणम्—

**सावज्ञभागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः।**
**कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम्।।[32]**

अत्र पादपतनं साध्यमुपन्यस्य ललाटगतयावकरसतिलकपङ्क्तिः साधकमुपन्यस्तम्।

आचार्यभोजराजेन सरस्वतीकण्ठाभरणे अर्थालङ्कारेषु प्रत्यक्षानुमानागमोपमानार्थापत्यलङ्काराः निरूपितास्सन्ति। तत्र प्रमाणरूपालंकारेषु सर्वप्रथमं प्रत्यक्षलक्षणं निरूप्यते—

**प्रत्यक्षमक्षजं ज्ञानं मानसं चाभिधीयते।**
**स्वानुभूतिभवं चैवमुपचारेण कथ्यते।।[33]**

तत्रान्येषां प्रमाणानां प्रत्यक्षमूलकत्वात् प्रथमं प्रत्यक्षलक्षणं निरूपितम्। साक्षात्कारः प्रत्यक्षमिति प्रसिद्धमेव। तस्य विभागः अक्षजं बहिरिन्द्रियं तस्माज्जातम्, मानसं बाह्येन्द्रियानपेक्षेण मनसा जनितम्। स्वानुभूतिः सहजा चिद्शक्तिस्तस्या उत्पन्नम्। शरीराभिघाताद्यभिभूते प्रत्याहारतिरस्कृते वा मनसि यत् कदाचिदतिस्फुटाभं ज्ञानमुत्पद्यते न तस्य मनोनिबन्धनता शक्येऽभिधातुमिति चिच्छक्तिमेवाश्रयते। अत्र प्रश्नो जायते यत् इन्द्रियजन्य एव लोके साक्षात्कारिता प्रसिद्धेः कथमनुभूतिभवं तथेत्यत आह—उपचारेणेति।

---

29. नाट्यशास्त्रम्, 16/ 1,2,3,4,5
30. तत्रैव, 16/32
31. काव्यालङ्कारः (रुद्रटः), 7/56
32. तत्रैव, 7/46
33. सरस्वतीकण्ठाभरणम्, 3/46

"यदीन्द्रियजन्ये साक्षात्कारितानियमस्तदोपचारेण परिगणनम्। अथ भावनादिबलेन विनापीन्द्रियं भवतीति पक्षस्तदा मुख्यत एवेतिभावः इति रत्नदर्पणटीका।–[34] तत्रोदाहरणं यथा–

**क्रान्तकान्तवदनप्रतिबिम्बे मग्नबालसहकारसुगन्धौ।**
**स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः।।**[35]

अत्र मदिराश्रयाणां मुखप्रतिबिम्बसौगन्ध्यस्वादुताश्रव्यत्वशैत्यानां दृग्घ्राणरसनश्रवणत्वगिन्द्रियप्रात्यक्षता प्रतीयते।।

तत्राक्षजं प्रत्यक्षं द्विधा निरूपितम्–युगपदेकशश्च। मानसमपिद्विधा– सुखादिविषयमनुभूतार्थविषयञ्च। तत्रापि स्वानुभूतिभवमपि द्विधा– मिथ्यात्मकममिथ्यात्मकञ्च निरूपितमस्ति। एतेषां सर्वेषां मुदाहरणान्यपि प्रदर्शितानि सन्ति।[36]

**अनुमानालङ्कारः**–तत्रानुमानालङ्कारस्य लक्षणमित्थमस्ति–

**लिङ्गाद्यल्लिङ्गिनो ज्ञानमनुमानं तदुच्यते।**
**पूर्ववच्छेषवच्चैव दृष्टं सामान्यतश्च यत्।।**[37]

यस्य येन सहाविनाभावलक्षणा व्याप्तिः संदिग्धसाध्यधर्मधर्मिरूपपक्षवृत्तितारूपा पक्षधर्मता च गृह्यते तस्मात्तस्य प्रतीतिरनुमानं यथा धूमाद्वह्नेः। स हि यथाविधे सिद्धस्तथाविधसंनिधानं सूचयति। तत्र यस्मात्प्रतीतिरूत्पद्यते तत् लिङ्गंचिह्नम्। व्याप्तिविशिष्टपक्षे धर्मतासंज्ञापकमित्यर्थः। इति रत्नदर्पणटीका।

तेषु कारणं दृष्ट्वा यत्र कार्यमनुमीयते तत्पूर्ववद्यथा–

**प्रविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः।**
**अयमायातः कालो हन्त हताः पथिकगेहिन्यः।।**[38]

अत्र वर्षर्तोः कारणभूतात् कार्यभूतविरहिणीनां मरणमनुमीयते। तेनैतत्पूर्व कारणमिहास्तीति पूर्ववदुच्यते। यत्र कार्यं दृष्ट्वा कारणमनुमीयते तच्छेषवत्, यत्र न कार्यं न कारणं- केवलमविनाभावमात्रं प्रतीयते तत्सामान्यतो दृष्टमित्यनयो उदाहरणेऽपि तत्र प्रदत्ते स्तः।[39]

**आप्तवचनस्य** लक्षणं यथा–"

---

34. सरस्वतीकण्ठाभरणम्- रत्नदर्पणटीका, तृतीयपरिच्छेदः- 46, पृ. 380
35. तत्रैव, 145
36. तत्रैव, 3- उदा.सं. 146, 147, 148, 149, 150
37. तत्रैव, 3-का.सं. - 47
38. तत्रैव, 3- उदा.सं.- 4/51
39. सरस्वतीकण्ठाभरणम्, 3-उदा.सं.- 152, 153

**यदाप्तवचनं तद्विज्ञेयमागमसंज्ञया।**
**उत्तम मध्यमं चाथ जघन्यं चेति तत्त्रिधा।।[40]**

आप्तवचनमेव शब्दागमप्रमाणरूपेण कथ्यते।

आप्तो यथार्थशब्दवक्ता। उत्तमं श्रुतिमूलम। अतएव तस्यावश्यानुष्ठेयत्वाभिधानम्। मध्यममनादिलोकव्यवहारमूलं तदेव नावश्यानुष्ठेयमित्यनेन प्रकाशयिष्यते। उभयविधाद्बहिःफलसंवादि जघन्यम्।।

तत्रोत्तमागमं द्विधा, विधिरूपं निषेधरूपं च। तयोर्विधिरूपं यथा–

**दमं दानं दयां शिक्षेः स्तनयित्नुर्वदत्यसौ।**
**ददध्व इति वाग्दैवी दयध्वं दत्त दाम्यत।।[41]**

अत्र श्रुतेस्तदेतद्विधिरूपमाप्तवचनम्। दयध्वं दत्त दाम्यतेति दैवी वागतो दमदानदयाः कर्त्तव्या इति विधिः पर्यवस्यति। निषेधरूपं यथा–

**निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुःस्फुरितोत्तराधरः।**
**न केवल यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्।।[42]**

अत्रापभाषणस्य निन्दार्थवादेन निषेधविधिः कल्प्यते, तेन महान्तो नापभाषितव्या इति वाक्यार्थे तात्पर्यादयं निषेधरूप–आगमः। तदेतदुभयमप्यवश्यानुष्ठेयत्वादुत्तमम्।

पुनर्मध्यमपि द्विधा–निर्दिष्टवक्तृकमर्दिष्टवक्तृकञ्चेति।

जघन्यमपि द्विधा–काम्यं निषिद्धं च। एतेषां सर्वेषां भेदोपभेदानामुदाहरणपूर्वकं निरूपणं क्रियतेभोजराजेन।[43]

**उपमानालङ्कारः**–उपमानालङ्कारस्य लक्षणं यथा–

**सदृशात्सदृशज्ञानमुपमानं द्विधेह तत्।**
**स्यादेकमनुभूतेऽर्थेऽननुभूते द्वितीयकम्।।**
**तदाभूतार्थविज्ञानजनकत्वेन हेतुना।**
**नास्मादभिनयालेख्यमुद्राबिम्बादयः पृथक्।।[44]**

---

40. तत्रैव- 3-उदा.सं.- 49
41. तत्रैव, 3-उदा.सं.- 158
42. तत्रैव, 3-उदा.सं.- 159
43. तत्रैव, 3-उदा.सं.- 160, 161, 162, 163, पृ.सं. 386, 387
44. तत्रैव, 3-उदा.सं.- 50, 51

तत्र मीमांसका: अनुभूतविषयमेवोपमानप्रमाणान्तर्गतं स्वीकुर्वन्ति। नैयायिकास्तु अननुभूतविषयमेवोपमानम्। तत्रानुभूतविषयाननुभूतविषययोरुदाहरणमपि प्रदत्तमस्ति।[45]

एवमेवाभिनयालेख्यमुद्राप्रतिबिम्बादीनामुदाहरणद्वारा उपमानालङ्कारस्य निरूपणं क्रियते।[46]

**अर्थापत्यलङ्कारः**–अर्थापत्यलङ्कारस्य लक्षणं यथा–

> **प्रत्यक्षादिप्रतीतोऽर्थो यस्तथा नोपपद्यते।**
> **अर्थान्तरं च गमयत्यर्थापत्तिं वदन्ति ताम्।।**
> **सर्वप्रमाणपूर्वत्वादेकशोऽनेकशश्च सा।**
> **प्रत्यक्षपूर्विकेत्यादिभेदैः षोढा निगद्यते।।**[47]

प्रमाणप्रतीतस्यार्थस्यान्यथाकरणानुपपत्तिज्ञानेन प्रसूतं ज्ञानमर्थापत्तिः। अनुपपद्यमानार्थप्रत्यायकं च प्रमाणं प्रत्यक्षादिभेदात् षट्प्रकारकम्। यदर्थान्तरं गमयति तामर्थापत्तिं वदन्तीति। अर्थान्तरगतिरेवार्थापत्तिरिति व्यक्तम्। तत्र एकशः प्रत्यक्षपूर्विकाप्रत्यक्षादिपूर्विकाअनेकशः–एकशोऽनुमानपूर्विका, अनेकशः उपमानादिपूर्विका–एकशोऽभावपूर्विका–अनेकशोऽर्थापत्यादिपूर्विकादयः भेदाः सोदाहरणं निरूपितास्सन्ति।[48] तास्वेकशः प्रत्यक्षपूर्विका यथा–

> **निर्णेतुं शक्यमस्तीति मध्यं तवनितम्बिनी।**
> **अन्यथानुपपत्त्यैव पयोधरभरस्थितेः।।**[49]

अत्रार्थापत्यलङ्कारो विद्यते। स्तनभरस्थितिः प्रत्यक्षगृहीता सा चाधारमन्तरेणानुपद्यमाना मध्यं कल्पयति। सा च कल्पनार्थापत्तिः।

अभावप्रमाणालङ्कारः–**असत्ता या पदार्थानामभावः सोऽभिधीयते।**

**प्रागभावादिभेदेन स षड्विध इहेष्यते।।**[50]

तत्र प्रागभाव–प्रध्वंसाभाव–इतरेतराभाव–अत्यन्ताभावादयः षड्भेदाः सोदाहरणं निरूपितास्सन्ति।[51]

तेषु प्रागभावो यथा–

---

45. सरस्वतीकण्ठाभरणम्, तृतीयपरिच्छेदः- उदा.सं. 164, 165
46. तत्रैव, 3-उदा.सं.- 166, 167, 168, 170
47. 3- का.सं. 52, 53
48. तत्रैव, 3-उदा.सं.- 172, 173, 174, 175, 176 ।
49. तत्रैव, 3-उदा.सं.- 171
50. तत्रैव, 3-उदा.सं.- 54
51. तत्रैव, 3-उदा.सं.- 177, 178, 179, 180, 181, 182, 183 ।

**अनभ्यासेन विद्यानामसंसर्गेण धीमताम्।**
**अनिग्रहेण चाक्षाणां व्यसनं जायते नृणाम्।।**[52]

अत्र विद्याऽनभ्यासादेः प्रागभावस्य व्यसनादिकारणत्वम्। **मम्मटाचार्यः काव्यप्रकाशस्य दशमोल्लासे अनुमानालङ्कारमित्थं निरूपयति–**

**"अनुमानं तदुक्तं यत् साध्यसाधनयोर्वचः। पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम्। धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यत्वम्।।"**[53]

अत्र साध्यसाधनयोः ग्रहणेन अनुमानोपयोगिसमस्तशब्दाः गृह्यन्ते इति ग्रन्थकाराणामभिप्रायः। तत्रानुमानालङ्कारस्योदाहरणमपि प्रदत्तमस्ति।[54] तस्मिन्नोदाहरणे पूर्वार्द्धेकथितार्थः साधनरूपः उत्तरार्द्धे कथितार्थश्च साध्यरूपो अतएवत्रानुमानालङ्कारः। यत्तद्शब्दाभ्यां धर्मिणोः व्याप्तिः सूच्यते।

रूय्ययकेन स्वालङ्कारसर्वस्वग्रन्थे **अनुमानार्थापत्यलङ्कारौ** निरूपितौ। तत्रानुमानालङ्कारस्य लक्षणं यथा–

"साध्य साधननिर्देशोऽनुमानम्।" यत्र शब्दवृत्तेनपक्षधर्मान्वयव्यतिरेकवत्साधनं साध्यप्रातीतये निर्दिश्यते सोऽनुमानमलंकारः।।"[55] तत्रोदाहरणं यथा–

**यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं–**
**यत्तत्रैव पतन्ति संततममी मर्मस्पृषो मार्गणाः।**
**तच्चक्रीकृतचापसञ्जितशरप्रेङ्खत्करः क्रोधनो**
**धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः।**[56]

अत्र योषितां भ्रूव्यापारेण मार्गणपतनं स्मरपुरोगामित्वेऽसाध्येऽनलंकृतमेव साधनमिति शुद्धमनुमानम्। अर्थापत्यलङ्कारस्य लक्षणमित्थं निरूपयति रूय्यकाचार्यः–

**दण्डापूपिकयार्थान्तरापतनमर्थापत्तिः।**[57]

दण्डापूपयोर्भावो दण्डापूपिका। "दण्डमनोज्ञादिभ्यश्च' इति वुञ्।

---

52. सरस्वतीकण्ठाभरणम्, 3-उदा.सं.- 31
53. काव्यप्रकाशः, 10/117
54. तत्रैव, 10-उदा.सं.- 519
55. अलङ्कारसर्वस्वम्, पृ.सं. 146
56. तत्रैव. पृ.सं. 147
57. तत्रैव, पृ. सं. 156

"अत्र हि मूषककर्तृकेण दण्डभक्षणेन तत्सहभाव्यपूपभक्षणमर्थात्सिद्धम्। एवं न्यायो दण्डापूपिकाशब्देनोच्यते। ततश्च यथा दण्डभक्षणादपूपभक्षणमर्थायातं तद्वत्कस्यचिदर्थस्य निष्पत्तौ सामर्थ्यात्समानन्यायत्वलक्षणादर्थान्तरमापतति सार्थापत्तिः।" इति वृत्तौ। इयं चार्थापत्तिः द्विधा भवति। प्राकरणिकादप्राकरणिकस्या[58]र्थापतनमेक प्रकारः। अप्राकरणिकात्प्राकरणिकस्यार्थापतनं द्वितीयः प्रकारः। तत्राद्यो यथा–

**पशुपतिरपि तान्यहानिकृच्छ्रादगमयदद्रिसुतासमागमोत्कः।**
**कमपमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः॥**[59]

अत्र विभुवृत्तः प्राकरणिको लोकवृत्तान्तमप्राकरणिकमर्थादाक्षिपति।

द्वितीयो यथा–**धृतधनुषि बाहुशालिनि शैला न नमन्तिः यत्तदाश्चर्यम्।**
**रिपुसंज्ञकेषु गणना केव वराकेषु काकेषु॥**[60]

अत्रशैलवृत्तान्तोऽप्रामाणिको रिपुवृत्तान्तं प्राकरणिकमर्थादाक्षिपति इति।

आचार्यविश्वनाथेन साहित्यदर्पणस्य दशमे परिच्छेदे अनुमानहेतु-अर्थापत्ति-विकल्प-समुच्चयाद्यलङ्काराः निरूपिताः। तत्र अनुमानालङ्कारस्य लक्षणं यथा–

**अनुमानं तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्।**[61]

अर्थापत्यलङ्कारस्य लक्षणं यथा–

**दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते।**[62]

अनयोरलंकारयोः लक्षणनिरूपणे, अलङ्कारसर्वस्वग्रन्थस्य प्रभावो दृश्यते। तत्रानयोरलंकारयो उदाहरणमपि प्रदत्तमस्ति।[63]

अप्पयदीक्षितेन कुवलयानन्द इति ग्रन्थे प्रत्यक्षानुमानोपमानशब्दश्रुतिसामान्यार्थापत्यनुपलब्धिसंभवैतिह्ययादयः प्रमाणालङ्काररूपेण निरूपितास्सन्ति। तत्र प्रमाणालङ्कारे **प्रत्यक्षं** यथा–

---

58. अलङ्काररसर्वस्वम्, पृ. 156 वृत्तितः।
59. तत्रैव, पृ. 157
60. तत्रैव, पृ. 157
61. साहित्यदर्पणः, 10/63
62. तत्रैव, 10/83
63. तत्रैव, 10/ 63, 83, पृ.सं. 585, 607 ।

**क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ।**
**स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः॥[64]**

अत्र नेत्रादीनां पञ्चेन्द्रियाणां विषयरूपरसादेः वर्णनं कृतमस्ति यस्य प्रमा प्रत्यक्षप्रमाणेन जायते अतोऽत्र प्रत्यक्षालङ्कारः।

**अनुमानालङ्कारः**—यत्र केनापि प्रत्यक्षहेतुना कमपि परोक्षसाध्यमनुमीयते तत्रानुमानप्रमाणम्। यथा पर्वतोऽयं वह्निमान्, धूमात्। यदैतदनुमानं काव्यगतं कविप्रतिभोत्थापितञ्च जायते तदाऽनुमानालङ्कारः। यथा—

**निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः।**
**विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः॥[65]**

निलीयमानैर्विहगैः साधनैः सूर्यास्तगमनरूपसाध्यमनुमीयते।

**उपमानालङ्कारः**—**"तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले।**

**यस्तन्वि! तारकान्यासः शकटाकारमाश्रितः॥[66]**

द्वितीयोदाहरणं यथा—

**अत्र मन्मथमिवातिसुन्दरं दानवारिमिवदिव्यतेजसम्।**
**शैलराजमिव धैर्यशालिनं वेद्भि वेङ्कटपतिं महीपतिम्॥[67]**

पूर्वोदाहरणे उपमामूलभूतमतिदेशवाक्यं दर्शितम्। द्वितीयोदाहरणे अतिदेश वाक्यार्थसादृश्य-प्रत्यक्षरूपमुपमानं फलेन सह दर्शितमिति विशेषः। यथाऽनुमाने परामर्शस्य महत्त्वं भवति तथैव उपमानेऽतिदेशवाक्यस्येति। अतिदेशवाक्यमुपमानस्य धर्म उपमेयेऽतिदिश्यते।

**शब्दप्रमाणालङ्कारः**—आप्तवाक्यं शब्दः। यथोदाहरणम्—

**विवणगता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधुभाषितम्।**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति॥[68]**

अत्र शिवः परमेष्ठिनोऽपि कारणमित्यत्र **'यो ब्राह्मणं विदधाति पूर्वम्'** इति श्रुतिरूपं शब्दप्रमाणमुपन्यस्तम्। एवं स्मृतिपुराणागमलौकिकवाक्यरूपाण्यपि शब्दप्रमाणान्युदाहरणीयानि।

---

64. कुवलयानन्दः, अलङ्कार, सं. 108, पृ. 275, शिशुपालवधमहाकाव्यम्–10 सर्गः।
65. कुवलयानन्दः, अलङ्कार सं. 109, पृ. 276, 277
66. तत्रैव, अ.सं. 110, पृ. 277
67. तत्रैव, पृ.सं. 278
68. तत्रैव, अ.सं. 111, पृ. 278, कुमारसम्भवम्, 5/81

**स्मृत्यलङ्कारः**–तत्र स्मृतिर्यथा–

**बलात्कुरुत पापानि सन्तु तान्यकृतानि वः।**
**सर्वान् बलकृतानर्थानकृतान् मनुरब्रवीत्।।**[69]

शब्दप्रमाणे श्रुतिरभिमतार्थे प्रमाणत्वेनोपन्यस्ता। इह तु स्मृतिरनभिमतार्थे तद्दूषणपरेण प्रमाणतया नीतेति भेदः।

**श्रुत्यलङ्कारः**–तत्र श्रुतिर्यथा–

**त्वं हि नाम्नैव वरदो नाधत्से वरमुद्रिकाम्।**
**न हि श्रुतिप्रसिद्धार्थे लिङ्गमाद्रियते बुधैः।।**[70]

अत्र करिगिरीश्वरस्य वरद इत्यभिधानश्रुत्या सर्वाभिलषितदातृत्वं समर्थितम्। लिङ्गं यथा–

**विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः।**
**ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः।।**[71]

अत्र शिवस्य श्रुतिप्रसिद्धसर्वोपकारकपृथिव्याद्यष्टमूर्त्तिपरिग्रहलिङ्गेन तत्प्रवृत्तीनां लोकानुग्रहैकप्रयोजनत्वं समर्थितम्। लिङ्गस्यापि मूलभूतवेदानुमापकतया वैदिकशब्दप्रमाण एवान्तर्भावः। एवं लौकिकलिङ्गानामपि लौकिकशब्दोन्नायकतया लौकिकशब्दप्रमाणएवान्तर्भावः। अतः चेष्टारूपं प्रमाणान्तरं नाशङ्कानीयम्।[72]

**अर्थापत्त्यलङ्कारः**–अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तरकल्पनमर्थापत्तिः। यथा पीनो देवदत्तो दिवा न भुङ्क्ते– अर्थात् रात्रौ भुङ्क्ते। काव्येषु यत्रार्थापत्तिप्रमाणं स्यात् तत्र अर्थापत्यलङ्कारो भविष्यति। यथा–

**निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनी!।**
**अन्यथा नोपपद्येत पयोधरभरस्थितिः।।**[73]

**अनुपलब्ध्यलङ्कारः**–अनुपलब्धिरभावोऽपि कथ्यते। कस्यापि वस्तुनः अभावग्रहणाय अनुपलब्धिप्रमाणं कल्प्यते। तदैव काव्ये प्रयुज्यते चेदनुपलब्ध्यलङ्कारः।[74]

---

69. कुवलयानन्दः, अक.सं. 112, पृ. 279
70. तत्रैव, अ.सं. 113, पृ. 280
71. तत्रैव, पृ. 280
72. तत्रैव, पृ. 281, वृत्तितः
73. तत्रैव, अ.सं. 114, पृ. 282
74. कुवलयानन्दः, अं.सं. 115, पृ. 283

**सम्भवालङ्कारः**–उदाहरणं यथा–

**"अभूतपूर्वं मम भावि किं वा सर्वं सहे मे सहजं हि दुःखम्। किंतु त्वदग्रे शरणागतानां पराभवो नाथ! नतेऽनुरूपः॥"**[75] यथा वा - मालतीमाधवे- 1-6

**ये नाम केचिदिह नः प्रथयन्त्यवज्ञां**
**जानन्ति ते किमपि तान्प्रति नैष यत्नः।**
**उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा**
**कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥**[76]

अत्राद्योदाहरणे 'अभूतपूर्वं मम भावि किं वा' इति संभवप्रमाणसिद्धार्थो दर्शितः। द्वितीयोदाहरणे संभवोपपादकं कालानन्त्यादिकमपि दर्शितम् इति भेदः।

ऐतिह्यालङ्कारः–ऐतिह्यं यथा–

**कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे।**
**एति जीवन्तमानन्दो नरं वर्षशतादपि॥**[77]

अत्र "लौकिकी गाथेयम्" इत्यनिर्दिष्टप्रवक्तृप्रवादपारम्पर्यरूपता दर्शिता।

पण्डितराजजगन्नाथेनापि रसगंगाधरस्य द्वितीयानने अनुमानार्थापत्तिसामान्यविकल्पादयोऽलङ्काराः निरूपिताः। तत्रानुमानालङ्कारः यथा–"**अनुमितिकारणमनुमानम्।**"[78]

स्वलक्षणं स्फुटयति–"अनुमितिश्चानुमितित्ववती। अनुमितित्वं चानुमिनोति मानससाक्षात्कारसाक्षिको जातिविशेषः। व्याप्तिप्रकारकपक्षधर्मतानिश्चयजन्यज्ञानं वानुमितिः। तस्याश्चकरणं व्याप्तिप्रकारकलिङ्गनिश्चय इत्येके। व्याप्यत्वेन निश्चीयमानं लिङ्गमित्यपरे। इदं च साधारणमनुमानम्।"[79]

यथा चोदाहरणं–**तस्मिन्मणिव्रातहतान्धकारे पुरे निशालोपविधानदक्षे।**
**सद्यो वियुक्ता दिवसावसानं काकाः सशोकाः कथयन्ति नित्यम्।**[80]

अत्र कथनं स्फुटः बोधः। स चानुमित्यात्मकः कोकवियोगरूपस्य लिङ्गस्य व्याप्यत्वेन निश्चयात्कारणाइदुत्पद्यते।

---

75. तत्रैव, अ.सं. 116, पृ. 283
76. तत्रैव, पृ. 283, 284, मालतीमाधवम्- 46
77. तत्रैव, अ.सं. 117, पृ. 284
78. रसगंगाधरः. द्वितीयमाननम्, पृ. 595
79. तत्रैव, पृ. 595–596
80. रसगंगाधरः, द्वितीयमाननम्, पृ. 596, 597

अर्थापत्यलङ्कारः–लक्षणं यथा–

**केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्यापत्तिरर्थापत्तिः।।**[81]

ततश्च कस्मिश्चिदेकस्मिन्नर्थे वर्णिते तत्कारणकत्वादर्थान्तरस्यसिद्धिरर्थापतिरिति तात्पर्यम्। युक्तिसाम्येनैकस्मादर्थादन्यस्यार्थंस्योपस्थितिरर्थापत्तिरिति भावः। तुल्यः समानः न्यायः कारणम् यस्य तत्त्वादित्यर्थः। आपतनमिति उपस्थितिरिति यावत्।

उदाहरणं यथा–

**लीलालुण्ठितशारदापुरधियामस्माद्दशानां पुरो**
**विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेद्बालिशाः।**
**अद्याश्वः फणिनां शकुन्तशिशवो दन्ताबलानां शशाः।**
**सिंहानां च सुखेन मूर्धनि पदं धास्यन्ति शालावृकाः।।**[82]

इत्यस्मिन् पद्ये प्रस्तुतेन पण्डित-मूर्ख-वृत्तान्तेनप्रस्तुतस्य फणिपक्षिशिशवादिवृत्तान्तरस्य कल्पना भवतीत्यर्थापत्तिः।

**अष्टादशशताब्द्यामान्ध्रदेशीयोबुक्कपट्टणं वेङ्कटाचार्येण विरचितालङ्कारकौस्तुभः' इति ग्रन्थे निरूपितेष्वलङ्कारेषु प्रमाणालङ्कारोऽपि एकः अलङ्कारः। यथा–**

**प्रत्यक्षादिप्रमाणानां यद्यन्ययतममुच्यते।**
**तदा प्रमाणालङ्कारः बहुधा च स इष्यते।।**[83]

तत्र प्रत्यक्षं यथा–

**अयं यक्षसूनुर्जयन्तो वसन्तो झषाङ्को मृगाङ्कोऽयवेति प्रतर्क्यः।**
**महानीलनीलत्विषा गोपबालं विनिश्चित्य दृग्भ्यां वधूसञ्जहर्ष।।**[84]

उपर्युक्तविवेचनेन परिलक्ष्यते यत् साहित्यशास्त्रीयग्रन्थेषु अलङ्कारनिरूपणप्रसङ्गे प्रायशः सर्वेषां प्रमाणानामलङ्कारत्वेनोल्लेखः कृतः शास्त्रकारैः। एतेषां प्रमाणानां काव्येषु कथमलङ्कारता–सन्दर्भेऽस्मिन् कथयति रसगंगाधरकारः– **"अस्य च कविप्रतिभोल्लिखितत्त्वेन चमत्कारित्वेकाव्यालङ्कारता।"**[85]

वस्तुतः साहित्यशास्त्रीयाचार्याणां मतमस्ति यत् काव्येषु कुत्रापि शास्त्राणां विरोधः न भवेत्। यद्यपि काव्यरचनायां स्वतन्त्रः कविः, तथापि शास्त्रप्रतिपादिताः ये नियमाः, शास्त्रप्रतिपादितानि यानि

81. तत्रैव, द्वितीयामाननम्, पृ. 635, 636
82. तत्रैव, द्वितीयमाननम्, पृ. 636
83. अलङ्कारकौस्तुभः, द्वितीयाध्यायः, का.सं. 109
84. तत्रैव, द्वितीयाध्यायः, उदा.सं. 270
85. रसगंगाधरः, द्वितीयमाननम्, पृ. 596

तत्त्वानि सन्ति तेषां विरुद्धं कविभिरपि नाचरणीयमिति। नोचेत् विरुद्धदोषयुक्तं भविष्यति काव्यम्, यत् सर्वथा न ग्राह्यम्। यथा च प्रतिपादयति भोजराजः–

**विरुद्धं नाम तद्यत्र विरोधस्त्रिविधो भवेत्।**
**प्रत्यक्षेणानुमानेन तद्वदागमवर्त्मना।।**

**यो देशकाललोकादिप्रतीपः कोऽपि दृश्यते।**
**तमामनन्ति प्रत्यक्षविरोधं शुद्धबुद्धयः।।**[86]

**तत्र देशकाललोकादीनामुदाहरणान्यपि प्रदर्शितानि सन्ति।**[87]

**अनुमानविरोधः यथा–**

**युक्त्यौमिचत्यप्रतिज्ञादिकृतो यस्त्विह कश्चन।**
**अनुमानविरोधः स कविमुख्यैर्निगद्यते।।**[88]

आगमविरोधो यथा–

**धर्मार्थकामशास्त्रादिविरोधः कोऽपि यो भवेत्।**
**तमागमविरोधाख्यं दोषमाचक्षते बुधाः।।**[89]

तत्र युक्तिविरुद्ध- औचित्यविरुद्ध-प्रतिज्ञाविरुद्ध-धर्मशास्त्रविरुद्ध-कामशास्त्रविरुद्ध-अर्थशास्त्रविरुद्धादीनामुदाहरणान्यपि प्रदर्शितानि सन्ति।[90]

इत्थमिदं निर्णीतं यत् कवीनां कृते विविधशास्त्रेषु प्रतिपादितानां तत्त्वानां ज्ञानमपेक्षते। यतोहि काव्येषु सर्वासां विद्यानां सहभावः दृश्यते। अष्टादशविद्यानां सहभावेन काव्यं, चतुर्वर्गफलसमन्वितं, "रामादिवत्प्रवर्तितव्यं न रावणादिवत्" इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्युपदेशयुक्तं, विधिनिषेधात्मक-धर्मोपदेशपरमार्थसमन्वितं, विशिष्टसौन्दर्ययुक्तं, सरल-सुबोधरीत्यातत्वज्ञानप्रदञ्च भवति सर्वेषां मानवानां कृते, तत्रापि विशेषरूपेण सुकुमारबुद्धीनां कृते।

अतएव शास्त्रान्तरेषु प्रतिपादितानि यानि तत्त्वानि, ये पदार्थास्सन्ति, तेषामुपयोगः कविभिः स्वकाव्यस्य सौन्दर्यसम्पादनाय, गौरववर्धनाय च क्रियते। यदा एते पदार्थाः काव्येषु प्रयुज्यन्ते कविभिः तदा कविप्रतिभाबलेन ते पदार्थाः काव्यमलङ्कुर्वन्ति चमत्कारित्वञ्च जनयन्ति। "काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते" इति लक्षणवाक्येन शास्त्रान्तरेषु प्रतिपादितानां प्रमाणानांमलङ्कारत्वेन प्रतिपादनं कृतं साहित्यशास्त्रीयाचार्यैश्चेति महाकवीनां साहित्यशास्त्रीयाचार्याणाञ्च महद् वैशिष्ट्यमेव।

---

86. सरस्वतीकण्ठाभरणम्, प्रथमपरिच्छेदः, का.स. 54, 55
87. तत्रैव, प्रथमपरिच्छेदः– श्लोक सं. 66, 67, 68 ।
88. तत्रैव, प्रथमपरि. का.सं. 56
89. तत्रैव, प्रथमपरि. का.सं. 57
90. तत्रैव, प्र.परि. उदा.सं. 69, 70, 71, 72, 73, 74।

# महाकविकालिदासस्य वेदानुगामिता

**डॉ. रामानुज उपाध्यायः**

कवयः क्रान्तदर्शिनः इति नियमात् कविर्नूनम् ऋषिरेव भवति। अस्माकं संस्कृतसाहित्ये कविवरपरम्परयात्मानं संयोजयन्तः समजायन्त महान्तो हि कवीश्वराः। तेष्वन्यतमः कालिदास एवंविधः कविराजो बभूव, यस्य महद्यशः सम्प्रत्यपि जगत्यां प्रसरति। कालिदासः कविताव्याजेन वैदिकपरम्पराणामेव व्याख्यानं चक्रे। तस्य वेदेषु महती निष्ठा अस्ति। अतएव पदे पदे वेदान् प्रति श्रद्धाभावः तेषु काव्येषु दरीदृश्यते। वैदिकधर्माधीनजीवनमार्गस्योन्नायकोऽयं महाकवि र्नकदापि मलीमसींपद्धतिमनुसरति। तथाचोक्तं स्वयमेव महाकविना–

**पथः श्रुतेर्दर्शयितार ईश्वरा।**

**मलीमसामाददते न पद्धतिम्।।**

एतावता सर्वत्र तत्साहित्ये श्रुतिनिर्दिष्टस्य स्मृतिसमर्थितस्य चैव मार्गस्य प्रतिपादनं समुपलभ्यते। ततश्चेह कानिचनोदाहरणानि प्रस्तूयन्ते।

रघुवंशस्य प्रथमे एव सर्गे मनुं वेदानामाद्यक्षरं प्रणवं मेने यथा–

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।**

**आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव।।[2]**

मानवानामभ्युदयाय वेदेषु ये, अपि सदुपदेशा आदेशा वा सन्ति तानेव यथास्थानं कालिदासः स्वसाहित्ये निष्ठामयेन रचनाचातुर्येण च सन्निवेशयति, यथा संस्कारवर्णनप्रसंगे मानवजीवनं संस्कर्तुं वेंदेषु संस्कारपरम्परा सन्दृश्यते। संस्कारपूत एव पुमान् शुद्धाचारो भवति संसारे साभिलाषः। नामकरण संस्कारप्रसंगे वेदे एवमुपदिष्टमस्ति यत् पितैव बालस्य नामकरणं कुर्यात् स एव प्रथमं नाम्ना बालकमलङ्कुर्यात्। यथा यजुर्वेदे-

**कोऽसि कतमोऽसि कस्यासि को नामासि।**

**यस्य ते नामामन्महियन्त्वासोमेनातीतृपाम।।[3]**

---

1. रघुवंशम् 3-46
2. रघुवंशम् 1 सर्ग
3. य. मा. सं. 7-29

अमुं मन्त्रं पठन् बालस्य यथानिर्दिष्टसंस्कारविधिना नाम करोति। रघुवंशेऽपि राजादिलीपश्चिरादधिगतं पुत्रं वेदमन्त्रपूतेन नामकरणसंस्कारेण पावयति। अथ च पुत्रस्य श्रुतपारगामितां शत्रोश्चान्तकारितां कामयमानो रघुनाम्ना तं संस्करोति।

**श्रुतस्ययायादयमन्तमर्भकस्तथा परेषां युधिचेति पार्थिवः।**
**अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्नारघुमात्मसंभवम्॥[4]**

एवमेव यदा राजा रघुः ब्राह्मेमुहूर्त्ते सूतिकागेहे स्वजायायाः क्रोडे पुत्ररत्नं ददर्श तदासौ परमप्रीतः सन् आत्मजस्य नाम अजं चकार। **ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम्।**

**अतः पिता ब्रह्मणएव नाम्ना तमात्मजन्मानमजंचकार॥[5]**

एवमेव उपनयनसंस्कारेऽपि

उपनयनमन्तरेण बालो हि द्विजतामेव नोपयातीति वैदिकःसिद्धान्तः। उपनीत एव ब्रह्मचारी वेदाध्ययने प्रवृत्तो भवति अष्टवर्षब्राह्मणमुपनयीत तमध्यापयीत[6] इति विधिना ब्रह्मचारिणमुपनीय तमध्यापयति वेदम् आचार्यः। **यथा-आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्तः।**

**तं रात्रिस्तिस्त्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्तिदेवाः॥[7]**

महाकविकालिदासः रघुवंशे राजकुमारस्य रघोर्विद्याप्रसङ्गेऽतीव दत्तावधानो दृश्यते। अतएव असौ प्रथमं बालस्योपनयनं वर्णयति तदनन्तरं विद्याभ्यासञ्च् यथा–

**अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम्।**
**अवन्ध्ययत्नाश्च बभूवुरत्रते क्रिया हि वस्तूपहिता प्रसीदति॥[8]**

अपिच् पारिवारिकान् जनान् सुखान्वितान् कर्तुं बहवो विचारा वेदे विभान्ति। तदर्थमथर्ववेदे केचन मन्त्राः प्राप्यन्ते तान्मन्त्रान् पठित्वा विचार्य च व्यवहृतिर्वितन्यते तर्हि नूनं परिवारे भवति सुखाधिवासः। यथा–

**अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।**
**जायापत्ये मधुमतीं वाचं वदतु शान्तिवाम्॥[9]**

---

4. रघु 3–21
5. रघुवंशम् 5–36
6. वे भा. भूमिका प. 2
7. अथर्व सं. 12–5–3
8. रघु. 3–29
9. अथर्वः 3–30–2

**मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुतस्वसा।**

**सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥[10]**

कालिदासः एतान् मन्त्रानभिवीक्ष्य एव स्वकृतिषु यथावसरं पारिवारिकानां जनानां वर्णनं चकार। लोकेऽपि स एव पुत्रो विजयते जनैरभिनन्द्यते च यः पितरमनुवर्तते। रघुवंशे अजः सर्वात्मना स्वपितरमेवानुसरति। तद्यथा-

**रूपं तदोजस्वि तदेववीर्यं तदेव नैसर्गिकमुन्नतत्त्वम्।**

**न कारणात् स्वाद् बिभिदेकुमारः प्रवर्तितोदीपइव प्रदीपात्॥[11]**

निरुक्ते एको मन्त्रः प्राप्यते तदेवेह प्रसंगादुपन्यस्यते। अंगादंङ्गात् सम्भवति हृदयाधिजायसे।

**आत्मावै पुत्रनामासि स जीवशरदः शतम्।**[12] अस्य इदं तात्पर्यं यत् पुत्रः पितुरनुकृतिरेव भवति। अतएव पुत्राभ्युदयमात्माभ्युदयमेव मन्यते पिता। श्रुतिमिमामनुसरन् वर्णयति कालिदासः

**तमङ्कमारोप्य शरीरयोगजैः सुखैन्रिषिञ्चन्तमिवामृतंत्वचि।**

**उपान्तसंमीलितलोचनोनृपश्चिरात् सुतस्पर्शरसज्ञतांययौ।[13]**

पितरि सत्कृतिं वितन्वानेन पुत्रेण पिता पुत्रे वत्सलतामास्थापयता पित्रा च पुत्रः कथं परांप्रीतिमनुभवत इति कालिदासः वर्णयति-

**पितासमाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन**

**पुत्रस्तथैवात्मजवत्सलेन स तेन पित्रा पितृमान् बभूव॥[14]**

पुत्रस्य मातरि निर्विषमा भावना भवेत्। सर्वासु मातृषु पुत्रः समतया श्रद्धां प्रकटयेत्, इमामेव भावनां पोषयितुं कालिदासः रामचरित्रं वर्णयन्नाह-

**सर्वासु मातृष्वपिवत्सलत्वात् स निर्विशेषप्रतिपत्तिरासीत्।**

**षडाननापीतपयोघरासु नेताचमूनामिव कृत्तिकासु॥[15]**

यज्ञकर्मप्रसंगमभिलक्ष्य वेदेषु बहवो मन्त्राः समागताः। तत्र केचनेह प्रस्तूयन्ते।

**"उत्तिष्ठ ब्रह्मणस्पते देवान् यज्ञेन बोधय। आयुः प्राणं प्रजां पशून कीर्तिं यजमानं च**

10. अथर्व 3-30-3
11. रघु 5-37
12. नि. 3-1-4
13. रघु. 3-26
14. रघु 18-11
15. रघु 14-22

**वर्धय।।**[16] अस्यायमभिप्रायोयत् संसारे श्रेष्ठा पुरुषाः स्वजीवनं सफलयितुं श्रेष्ठं यज्ञकर्म कृत्वा श्रेष्ठान्भावान् स्वमनसि सम्भावयन्ति, परेषामपि चेतसि प्रसुप्तान् भद्रभावान् प्रबोधयन्ति। एकस्मिन् स्थाने पुरुषममिलक्ष्योपदेशः प्रदत्तः यद हे मानव! इयं ते यज्ञिया तनूः।[17] अर्थात् ते शरीरमेव यज्ञमयं विद्यते। यज्ञं कुर्वन् पुरुषः पापमुक्तो भवति यथा वेदे पापमुक्तये प्रार्थयते यज्ञकर्ता, **"यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये। यदेनश्चकृमा वयमिदं तदवयजामहे**[18]**।**

कालिदासो यज्ञस्य महत्त्वं सम्यगेव जानाति। सावधानतयासौ कविः स्वपात्राणां जीवनं यज्ञानुष्ठानेन पवित्रयति। ऋषिभिरनुमोदितामिमां यज्ञप्रक्रियां सर्वेऽपि संस्कृतकवीश्वराः प्रकृतिषु प्रथितवन्तः। कवीश्वराणामप्यर्चनीयो निरुपमः कालिदासः स्वकीयासु सर्वास्वपिकृतिषु यज्ञवैशिष्ट्यं प्रतिपादयन् मानवजीवनं सफलयितुं वेदस्योपदेशपरम्परां काव्यमाध्यमेन सुतरां रक्ष। अयं महाकविः न केवलं प्रातः कालिक होमवर्णनं करोति अपितु सायंकालिक होमवर्णनमपि करोति। यथा–

**सायंतने सवनकर्मणि सम्प्रवृत्ते**
**वेदीं हुताशनवतीं परितः प्रकीर्णाः**
**छायाश्चरन्ति बहुधाभयमादधानाः**
**सन्ध्यापयोदकपिशाः पिशिताशनानाम्।।**[19]

जीवस्य पुनर्जन्म कर्मानुसारं भवति। शुभैः कर्मभिः शुभां योनिमापद्यते जीवः। वेदे स्पष्टतया एष सिद्धान्तः समधिगम्यते। **''द्वे सृती अश्रृणवं पितृणामहं देवानामुतमर्त्यानाम्।**

**ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरञ्च।**[20]
**जीवोभृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना स योनि।।**[21]

तत्र सिद्धान्तस्यास्यवर्णनं कविरेवं करोति, यदाश्रीरामपरित्यक्ताश्रीसीता वाल्मीकितपोवने वसतिं करोति तदा तपश्चरन्ती सीता अन्यस्मिन् जन्मनि पुनरपि श्रीरामेण सम्बन्धं कामयते। यथा

**साहं तपः सूर्यनिविष्टदृष्टिरुर्ध्वं प्रसूतेश्चरितुं यतिष्ये।**
**भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः।।**[22]

यदि कदाचित्सुखोपविष्टोऽपि पुमान् चिन्ताव्यग्रो भवति तर्हि तन्मूले जन्मान्तरेणाबद्धः

---

16. अथर्ववेद 19-63-1
17. वा. सं 4-13
18. वा. सं 3-45
19. अभि शा . 3-24
20. वां सं 19-46
21. ऋ सं 1-164-3
22. रघुवंशः 14-66

कश्चन भावविशेष एव स्वीकर्तव्यः। दृश्यताम्

**रम्याणि वीक्ष्य मधुरॉश्च निशम्यशब्दान्-पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः।**
**तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणिजननान्तर सौहृदानि।।[23]**

तपोवर्णन प्रसङ्गेऽपि कालिदासस्य महती निष्ठा वेदानुकूला एव वर्तत इत्युदीर्यते। तपोमयं जीवनमेव लोके प्रशस्यम्। सर्वेषां लौकिकाऽलौकिकानां चाभ्युदयानां मूले तप एव तिष्ठति। भद्र मिच्छद्भिः मनुष्यै तपोनिष्ठैरेव राष्ट्राभ्युदयदर्शनं परजनरक्षणं वा क्रियते। तद्यथा–

**भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे।**
**ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसन्नमन्तु।।[24]**

कालिदासोऽपि जानाति यत् पूर्वं सुखतत्त्ववेत्तारः कल्याणपराविद्वांसो राष्ट्राभ्युदयमिच्छन्तो ब्रह्मचर्यं परिपालयन्तो रहसि भृशं तपस्यन्ति। तेनैव राष्ट्रे बलधनादीनां पुष्टिर्जायते। कालिदासेन राज्ञां जीवने प्रजानां जीवने सर्वेषां वर्णाश्रमस्थानां मानवानां जीवनेच तपो दर्शनमकारि। अतएव शाकुन्तले दुष्यन्तः कथयति–

**यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयितत्फलम्।**
**तपः षड्भागमक्षय्यं ददत्यारण्यका हि नः।।[25]**

अपि च रघुवंशस्य त्रयोदशेसर्गे यदा रामः सीतया सह विमानमारुह्य अयोध्यामुच्चचाल तदाव्योमवर्त्मना यात्रां यापयन् रामः तपश्चरन्तं सुतीक्ष्णाख्यमृषिं दृष्ट्वा तपश्चर्यावैशिष्ट्यं वर्णयन् सीतां व्याजहार

**हविर्भुजामेधवतां चतुर्णां मध्येललाटन्तपसप्तसप्तिः।**
**असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेनदान्तः।।[26]**

कुमारसंभवे सदाशिवं सम्प्राप्त्यर्थं तपश्चरन्त्यापार्वत्या तु तपसो या पराकाष्ठा मुनिभिरङ्गीकृता साप्यपाकृता तपसा यथा–

**स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तयापुनः।**
**तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः।।[27]**

अतिथिसत्कारप्रसङ्गमादाय बह्वो मन्त्राः वेदेषु प्राप्यन्ते, येषु गृहागतानतिथीन् सत्कर्त्तुं जनाः

---

23. अभि. शा. 5-2
24. अथर्व. सं. 19-4!-1
25. अभि. शा. 2-15
26. रघु 13-41
27. कुं. सं 5-28

प्रेरिता भवन्ति। अतिथियज्ञस्यगणना नित्ययज्ञेषु क्रियते। यथा **इष्टं च वा एष पूर्तं च गृहाणामश्नाति।**

**यः पूर्वोऽतिथेरश्नाति। एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात्पूर्वो नाश्नीयात्।।**[28]

कालिदाससाहित्येऽपि अतिथियज्ञस्य महत्त्वं पदे पदे विराजते। दुष्यन्तो यदा कण्वाश्रमं विवेश तदा तत्स्वागतं तत्रत्याः तपस्विनस्तपस्विन्यश्च चक्रुः। ऋषिः कण्वः क्वगत इति पृच्छति दुष्यन्ते तपस्विरूपधारिणा वैखानसेनोत्तरितम् **इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गताः।**[29]

अपि च रघुवंशेऽपि यदा राजा रघुः श्रृणोति यद् वरतन्तुशिष्यःकौत्सः मामुपेतस्तर्हि तं कथं सत्करोति इति द्रष्टव्यम्–

**तमर्चयित्वा विधिवद्विधिज्ञस्तपोधनं मानधनाग्रयायी।**
**विशांपतिर्विष्टरभाजमारात् कृताञ्जलिः कृत्यविदित्युवाच।।**[30]

माङ्गलिकप्रस्थानेन स्वकीयां वाचमुपसंहरामीति धिया मंगलमयानि श्रुतिवचनानि कानिचन उपस्थाप्यन्ते।

लोके यदा माङ्गलिकप्रस्थानावसरः समायाति तदा पारिवारिका जना मंगलमयानि वचांसि निगद्य अनिष्टं वारयन्ति इष्टञ्चोद्भावयन्ति। यथाऽथर्ववेदे आयने ते परायणे दुर्वारोहन्तु पुष्पिणीः।

**उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवान्।।**[31]

शाकुन्तले यदा शकुन्तला पतिगृहं प्रयाति तदा मार्गं सुखदं कर्त्तुं व्योमवाचा वनदेवताभिः स्वस्तिगानं क्रियते। तत्र स्वस्त्यात्मके पद्ये कालिदासः शब्दपरिवृत्या सह वेदमन्त्रमनुवदन्नेवास्ति। यथा–

**"रम्यान्तरः कमलिनी हरितैः सरोभिः छायाद्रुमैर्नियमितार्कमरीचितापः।**
**भूयात् कुशेशयरजोमृदुरेणुरस्याः शान्तानुकूलपवनश्च शिवश्चपन्थाः।।"**[32]

तदित्थं कालिदासस्य वेदानुगामित्वं प्रतिपदमेवावलोक्यते। तस्य साहित्ये ये उपदेशाः सन्देशाः आदेशा वा सन्ति ते सर्वेऽपि वेदानुगा एवेति निश्चप्रचम्। अतएव अद्यापि लोके तत्साहित्यमधिगत्य जना निजजीवनं पवित्रयन्तः सञ्जीवयन्तः परिवर्धयन्तश्च तद्यशोगाथां गायंगायमनिर्वचनीयमानन्दमनुभवन्ति

इतिशम्।

---

28. अथर्व. स. 9-6-5-8
29. अभि. शा. प्रथम अंक
30. रघु 5-3
31. अथर्व. सं. 6-106-1
32. अभि. शा. 4-1

# पशु-पाश-पतीनां स्वरूपविवेचनम्

प्रो. शुद्धानन्दपाठकः

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्त्तेति नैयायिकाः।
अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः
सोऽयं नो विदधातु वाञ्छितफलं त्रैलोक्यनाभो हरिः॥

श्लोकेऽस्मिन् सर्वप्रथमं शिवः शर्वः देवदेवः वामदेवः महादेवः गिरिजाधवः भूदेवः कामदेवः सदाशिवः ध्रुवः अध्रुवः अभवः, धवः उपलवः, चतुर्भावः, देवासुरगुरुर्देवः, देवदेवात्मसम्भवः धर्मकृद्धर्मसम्भवः मनोजवः प्रभवः भवः, स्मृतः। अतः तत्सिद्धान्त एव प्रतिपाद्योऽत्र।

शैवदर्शनमुत्तरस्यां दिशि काश्मीरप्रदेशे प्रत्यभिज्ञातन्त्रं संवित्तन्त्रं स्पन्दशास्त्रं स्वतन्त्रशिवाद्वैतदर्शनमित्येवं व्यवह्रियमाणं संस्कृतग्रन्थैर्विस्तरेणोपपादितं दृश्यते। शिवसूत्रं चास्य मूलम्। आत्मेश्वरत्वनिरासकैर्नागबोध्यादिभिर्नास्तिकसिद्धैः समाक्रान्ते अस्मिन् जीवलोके रहस्यसम्प्रदायस्य अस्य अविच्छेदेच्छया स्वेच्छया एव महेश्वरः विश्वम्भरेश्वरः गणेश्वरः परात्परः लोककरः वेदकरः, सूत्रकारः धामकरः सर्वगोचरः भस्मशुद्धिकरः परावरः धनुर्धरः संवत्सरकरः सर्वेश्वरः अवाङ्मनसगोचरः शङ्करः महादेवगिरेः शिलातले शिवसूत्राणि समालिख्य स्वप्ने माहेश्वरशिखामणये वसुगुप्ताय उपदिदेश।

काश्मीरशैवदर्शनस्य शिवसूत्रं शिवदृष्टिश्च मूलग्रन्थौ स्तः। महर्षिदुर्वासाः शिवाज्ञातः त्र्यम्बकादित्यं मानसं पुत्र ससर्ज। तदनन्तरं काश्मीरशैवदर्शनस्य सम्पूर्णरहस्यस्य सम्पूर्णसिद्धान्तस्य चोपदेशं त्र्यम्बकादित्याय दत्तवान्। त्र्यम्बकादित्योऽपि गुहां गत्वा मानसं पुत्रं निर्ममे। अनेन प्रकारेण चतुर्दशसिद्धा अभूवन्। पञ्चदशतमः सिद्धः सर्वशास्त्रविशारदः संगमादित्यः भ्रमन् कश्मीरेऽगमत्। तस्य पौत्रः अरूणादित्यः शैवदर्शनस्य ज्ञाताऽऽसीत्। तस्य पौत्रः सोमानन्दः शिवदृष्टिग्रन्थस्य रचनां कृतवान्।

शैवदर्शने प्रमेयं त्रिविधं, पतिः पशुः पाशचेति।

**उक्तञ्च–पतिः पशुः पाश इति पदार्थास्त्रय ईरिताः।** इति।

पतिपशुव्यतिरिक्ताना पदार्थानां पाशपदार्थे एव अन्तर्भावः। अत्र पतिशब्देन इन्द्रः इत्युक्ते देवेन्द्र इतिवत्, भामेत्युक्ते सत्यभामेतिवच्च नामैकदेशे नामग्रहणात्पशुपतिरिति हर उच्यते तस्य परतत्त्वस्य स्वरूपलक्षणं पशुपाशप्रमाणाऽगम्यं निर्मलनिरतिशयस्वप्रकाशज्ञानानन्दात्मकं विभु नित्यं स्वतन्त्रं शिवमिति। तथा चोक्तं स्वायम्भुवे–

1. शैवपरिभाषा द्वितीयपरिच्छेदः

**अप्रमेयमनिर्देश्यमनौपम्यमनामयम्।**
**सूक्ष्मं सर्वगतं नित्यं ध्रुवमव्ययमीश्वरम्॥** इति॥

श्रीमत्पराख्ये च–

**तत्स्वरूपं भवेदस्य शिवस्य परमात्मनः।**
**चिद्रूपमात्मनो रूपं दृक्क्रियाशक्तिलक्षणम्॥ इति**

देवीकालोत्तरे च–

**आकाशमिव सर्वं तु सबाह्यान्तरं प्रिये॥**
**परानन्दमरूपं तु पश्यन्नानन्दभाग्भवेत्॥** इति

तस्य पञ्चविधकृत्यकारित्वं तटस्थलक्षणम्। तानि पञ्चविधकृत्यानि सृष्टि-स्थिति-संहार-तिरोधानाऽनुग्रहाः।

उक्तञ्च श्रीमन्मृगेन्द्रे–

**जगज्जन्मस्थितिध्वंसतिरोभावविमुक्तयः।**
**कृत्यं सकारकफलं ज्ञेयमस्यैतदेव हि॥** इति

अस्य च पत्युः सद्भावे वेदागमौ-अनुमानञ्च प्रमाणम्। वेदागमौ तु प्रसिद्धौ। अनुमानं तु– 'स्त्रीपुंनपुंसकादिभावेन नानाविधं तनुकरणादिकं जगत् सकर्तृकम् कार्यत्वात् घटवत् इति। अथवा विवादाध्यासितं जगत् स्वोपादानवित्कर्तृपूर्वकं कार्यत्वात् घटवदिति। तथा चोक्तं श्रीमच्छिवज्ञानबोधे–

**स्त्रीपुंनपुसंकादित्वाज्जगतः कार्यदर्शनाद्-**
**अस्ति कर्ता स हृत्वैतत्सृजत्यस्मान् प्रभुर्हरः॥**[2] इति॥

अयञ्च कर्ता अवस्थाभेदेन त्रिविधः। शक्तः, उद्युक्तः प्रवृत्तश्चेति। यदा सर्वं कार्यमुपादाने लीनं तदा तज्जननशक्तिमात्रयुक्तत्वात् शक्तः। यदा तु तदीयशक्तिः कार्यजननाभिमुखी तदोद्युक्तः। यदा तु सा जनितकार्या तदा प्रवृत्तशक्तियुक्तत्वात्प्रवृत्तः। तदुक्तं श्रीमृगेन्द्रे–

**शक्तोद्युक्तः प्रवृत्तश्च कर्ता त्रिविध इष्यते।**
**शक्तेः प्रवृत्तिभेदेन भेदस्तस्योपचारतः॥**[3] इति॥

ननु शिवसमवेतायां शक्तौ किं मानम्? विमतं करणजन्यं कार्यत्वादित्यनुमानमिति चेन्न; ज्ञानेच्छादीनां करणत्वसम्भवेन अर्थान्तरतया अनेन शक्तिसिद्धि-अयोगादिति, मैवम्, ज्ञानेच्छादीनामेव शक्तित्वेन तैरर्थान्तरस्य अभावात्। तर्हि तेषां भेदेन शक्तेरपि नानात्वं स्यादिति ऐक्यसिद्धान्तो व्याहन्यतेति

---

1. मृगेन्द्रागनः प्र.2 श्लोकः 3।
2. शिवसूत्रम्।
3. मृगेन्द्रगमः।

चेन्; ज्ञानेच्छादीनामपि स्वतो भेदाऽभावात्। एकस्या एव शक्तेः यदा कार्यानुकूलाऽदृष्टादिपरामर्शित्वं तदा ज्ञानत्वम्। यदि तु 'एवं भवतु' इत्याकारता तदा इच्छात्वम्। यदा तत्तत्कार्यजनकत्वं तदा कृतित्वमिति ज्ञानादिभेदोपपत्तेः। एवमेकैव तच्छक्तिः–

बिन्दु-शक्ति-मनोन्मनीन्महेश्वर्युमालक्ष्मीवाणीभेदेन सप्तधा भिद्यते।

अधुना पशुपदार्थो निरूप्यते। तत्र पशुर्नाम देहेन्द्रियादिव्यतिरिक्तो नित्यश्चिदात्मकोऽनेको विभुरनादिमलावृतोऽस्वतन्त्रः कर्ता च। अत्र देहेन्द्रियादिव्यतिरिक्त इत्यनेन देहेन्द्रियप्राणबुद्ध्यात्मवादानां निरासः। नित्य इत्यनेन क्षणिकात्मवादस्य। चिदात्मक इत्यनेन जडात्मवादस्य। अनेक इत्यनेन एकात्मवादस्य। विभुरित्यनेन अणुपरिमाणमध्यमपरिमाणात्मवादयोः। अनादिमलाऽऽवृतोऽस्वतन्त्रः इत्याभ्याम् आत्मेश्वरवादस्य च व्यावृत्तिः। कर्ता-इत्यनेन सांख्यात्मवादनिरासः।

आत्मनस्तिस्त्रोऽवस्थाः भवन्ति। केवलावस्था, सकलावस्था शुद्धावस्था चेति। तत्र यदा द्विविधेन देहेन प्राणेन्द्रियाऽन्तःकरणैश्च विनाकृतोऽत एवाऽभिव्यञ्चविधुरतयाऽऽणवावृतसंकल्पज्ञानक्रिया शक्तिः किमपि अबुध्यमानः आस्ते तदा केवलावस्था। यदा सूक्ष्मदेहेनाऽन्नमयप्राणमयमनोममविज्ञानमय-कोशैश्चावच्छिन्नस्तदा सकलाव्यवस्था। यदा कर्मसाम्ये तन्नियतशक्तिनिपाते च सति गुरुकृपावशाच्छिवानन्दाभिव्यक्तेः मलत्रयनिवृत्त्या शिवैक्याऽभिव्यक्तिस्तदा शुद्धावस्था।

तदेवमवस्थाभेदोपेतो मलसम्बद्धचिद्रूपो व्यापकः पशुः भवतीति। एष पशुः उपाधिभेदेन त्रिविधः सकलः प्रलयाकलः विज्ञानकलश्चेति तत्र सकलो नाम मलोपरूद्धदृक्छक्तित्वे सति तत्प्रसाराय कलादिमत्त्वे सति भोगाय कर्मसम्बद्धः। प्रलयाकलो नाम प्रलये उज्झितकलत्वे सति दीक्षया प्रायश्चित्तेन भोगाद्वा अशुद्धाध्वविषयकर्मपरिक्षयवच्चे सति भोक्ष्यमाणमिश्राध्वकर्मणा स्ववशीकृतकलासम्बन्धवान्। विज्ञानाकलो नाम विज्ञानादिना सर्वकर्माणि कलाश्च विहाय दृक्क्रियाऽऽवारक आणवमलमात्रयुक्तो विज्ञानकेवलः।

विज्ञानकेवलाश्च प्रशान्तकलुषा अप्रशान्तकलुषाश्चेति द्विविधाः। प्रलयाकला अपि द्विविधाः। पक्वमलाः अपक्वमलाश्चेति। तत्र शिवः पक्वमलान् अनुगृह्य तेभ्यो भुवनपतित्व ददाति। प्रलयकाले अपक्वमलाः प्राकृतभोगकर्मवशात् पुर्यष्टकदेहयुताश्च सकलाः भवन्ति। उक्तञ्च **''स्वेच्छयैव अनुगृह्णाति प्रलयाणूनपीश्वरः''**

सकला अपि त्रिविधाः, सांसिद्धिकवैनयिक-प्राकृतभेदात्। तत्र सांसिद्धिको नाम पूर्वजन्मनि कृतश्रवणमननिदिध्यासनोऽनिष्पन्नशिवसाक्षात्कारस्तदर्थं शुकवामदेवजडभरतादिवत् परिगृहीतदेहोऽविच्छिन्न निदिध्यासनवासनया शिवानुग्रहाच्छिवसाक्षात्कारवान्।

**वैनयिको नाम** गुरौ विनयशीलः सन्, दीक्षां लब्ध्वा मनोवाक्कायिकशिवधर्मैः, शुद्धः लौकिकशिवशास्त्रयोः परिज्ञानवान्।

**प्राकृतो नाम** स्वप्नज्ञानवत् ज्ञाताऽज्ञातबोधः, प्रकृतिजन्यदेहेन्द्रियादिष्वात्माभिमानवान्।

**अधुना पाशपदार्थविषये उच्यते।** तत्र प्राशत्वं नाम शिवानन्दाभिव्यक्तिविरोधित्वम्। तच्चाऽऽणवमलस्याच्छादकतया, तिरोधायकशक्तेस्तु तच्चोदयितृत्वेन, बिन्दुमायाकर्मणामपि भोगभोग्य

सम्पादनद्वारा वैषयिकसुखादिजनकत्वेन च बोध्यम्। अयञ्च पाशः पञ्चविधः आणवं तिरोधायकशक्ति र्बिन्दुर्मायाकर्मचेति। तत्र चत्वारः जडरुपाः। तिरोधायकशक्तिस्तु चिद्रूपापि पाशानुग्राहकत्वात् पाशः इत्युपचर्यते। तत्र आणवत्वं नाम आत्मनो दृक्क्रियारोधकत्वम्। अस्य आणवत्त्वोक्तिर्विभोरात्मनोऽणुत्व सम्पादनात्।

अयञ्चाणवमलो मोह-मद-राग विषाद-ताप-शोष-वैचित्र्याख्यकार्यभेदात्सप्तधा। तत्र मोहो नाम आत्मनामनादिः सहजो मदादीनां षण्णां हेतुः जानतामपि वनितादिषु मोहकरो मलः। स्वकीयतया प्राप्तेषु अङ्गनादिषु-अतिशयाऽभिमानो मदः। रागो नाम विषयाऽभिलाषः। विषयाऽलाभे विषण्णत्वं विषादः विषादात् प्रलापरूपः तापः। पुत्रमित्रकलत्रादिभिर्धनादिभिच मत्समो नास्तीत्यादिविषयचिन्ता वैचित्र्यम्। तद्विनाशे स्तब्धात्मकत्वं शोषः। अयं मलः द्रव्यरूपो भवितुमर्हति, अनेकशक्तित्वात्, अनलवत्; उक्तञ्च श्रीमत्पौष्करे-

किञ्च द्रव्यं मलोऽनेकशक्तिमत्त्वाद्यथाऽनलः। इति।।

तदेवमाणवं तदनुग्राहिका रोधकशक्तिरिति पाशाख्यं सिद्धम्।

तृतीयः बिन्दुपाशः-शुद्धस्य शब्दस्य तादृशानां च तत्त्वानामुपादानं बिन्दुः। सा च जडरूपा भगवतः परिग्रहशक्तिः कुण्डलिन्यपरपर्याया। अत्रैव शिवस्य लयादिरवस्थाभेदो रूद्राणूनां प्रबोधो विमुक्तिश्च। उक्तञ्च श्रीमत्पौष्करे-

**[1]"लयादिभेदः प्रागुक्तो यदुपाधौ शिवस्य तु।**
**स बिन्दुरिति मन्तव्यः सैव कुण्डलिनी मता। इति।**

**चतुर्थपाशः माया** सा च मयति ददाति विश्वमिति वा माति-आयाति विश्वमत्रेति वा माया। तदुक्तं पौष्करे

'मयत्यस्माज्जगद्विश्वं माया तेन समीरता।। इति।।

इयं माया कलादेः पृथिवीपर्यन्तस्य कार्यजातस्य उपादानभूता जडा भगवतः परिग्रहशक्तिः। सा चैका, बहुत्वे प्रमाणाभावात्। नित्याः, मूलकारणत्वात्। अनित्यत्वे, प्रलये कर्मणां निराश्रयत्व प्रसंगात्। सा च व्यापिनी, सर्वत्र कार्योपलम्भात्। उक्तञ्च "नित्यैका व्यापिनी वस्तुरूपा कर्माश्रया शिवा।। इति। अस्याश्च विचित्रशक्तित्वं विचित्रकार्यजनकतया। अनात्मनि देहादौ-आत्मभ्रमहेतुतया मोहिनीत्वञ्च। कर्मपाशः त्रिविधः। मनोवाक्कायरूपकारणभेदात्। तत्र मनोजन्यम् इष्टदेवतानुध्यानपरस्त्रीजिही र्षादिरूपम्। वाचिकं मन्त्रजपपरापवादादिरूपम्। कायिकं देवतार्चनाऽगम्यागमनादिरूपम्। तथा तत्र कारणत्रैविध्यात् त्रिविधकर्मकार्यं च सुखदुःखादिकम् आध्यात्मिकादिभेदेन त्रिविधम्। तत्र चित्तप्रसाद उद्वेगादिकम् आध्यात्मिकम्। चन्दनानुलेपनखड्गघातादिजन्यामाधिभौतिकम्। अभिमत-अनभिमत-वर्षा आतपादिजन्यमाधिदैविकम्।

---

1. पौष्करबिन्दुपरिच्छेदः श्लो 1

तथा च लौकिक-वैदिक-आध्यात्मिक-आधिमार्गिक-मान्त्रभेदेन पञ्चविधं कर्म। तत्र वापीकूपादिनिर्माण-अभक्ष्यभक्षणादिजनितं निवृत्तिकलाव्याप्त-अध्वावधिभोगस्य तद्धेतुशरीरादेश्च जनकं लौकिकम ज्योतिष्टोमाद्यनुष्ठानजनितं प्रतिष्ठाकलाव्याप्त-अध्वावधिभोगजनकं वैदिकम्। वैराग्यादिजन्यं विद्याकलाव्याप्तअध्वावधि भोगजनकम् आध्यात्मिकम्। योगजन्यं शान्तिकलाव्याप्ताऽध्वावधिभोगजनकमाधिमार्गिकम्। विज्ञानजन्यं शान्त्यतितकलाव्याप्ताध्वावधिभागेजनकं मान्त्रम्। तदेतत्पञ्चविधमपि कर्म वैषयिकसुखदुःखादिहेतुतया पाशः।

एतेषां च पाशानामसंस्पर्शे शिवैक्येन शिवानन्दाभिव्यक्तिलक्षणां मुक्तिं क्रमेणायमात्मा प्राप्नोति। सर्वे पाशयुक्ताः जीवाः यदा कर्मसाम्यमलपरिपाकाभ्यां युज्यन्ते तदा तेषु पारमेश्वरी शक्तिः पतति। तदा तेषां श्रेयोवेदने श्रद्धा जायते। विषयेभ्यः दोषदर्शनाद्यधीनं वैराग्यं जायते। एवं सञ्जातवैराग्यः श्रेयोवेदनाय गुरुमुपसर्पति। तस्माद्गुरोः दीक्षां प्राप्य जीवः शिवो भवति। दीक्षाविषये उक्तञ्च–

**[1]''दीयते शिवसायुज्यं क्षीयते पाशबन्धनम्।**
**अतो दीक्षेति कथिता बुधेः सच्छास्त्रवेदिभिः॥** इति

आचार्यमूर्तिमास्थाय स्वयमेव भगवान् शिवः जीवानामुपरि चतुर्धा शक्तिपातं कृत्वा दीक्षां ददाति, सा दीक्षा सप्तविधा भवति। तत्र पाशबन्धविमोक्षाभिप्रायेण वीक्षणं चाक्षुषीदीक्षा। तेनैवाभिप्रायेण दक्षिणहस्तेन स्पर्शनं स्पर्शदीक्षा। तदुद्देश्येनैव संहितामन्त्रोच्चारणं वाचिकीदीक्षा। अस्य जीवस्य पाशविमोक्षं भवतु- इति मनसाभिध्यानं मानसदीक्षा। तदभिप्रायेण शास्त्रप्रदानं शास्त्रदीक्षा। तदुद्देश्येनैव शिवे संयोजनं योगदीक्षा। कुण्डमण्डपादियुक्ता हौत्रीदीक्षा। सा द्विविधा ज्ञानवती क्रियावती च। यदा शक्तिपातो भवति तदा कुण्डलिनीशक्तेः चतुर्विधरूपेण प्राकट्यं जायते।

शारीरिक-कम्प-मुद्रा-आसन-नृत्यादिक्रियासु क्रियावतीरूपेण प्राकट्यं भवति। तत्त्वशुद्धि क्रियासु कलावतीरूपेण सा जागरूका भवति। मन्त्रेषु वर्णमयीरूपेण तथा च षट्चक्रवेधनक्रियासु वेधमयीरूपेण कुण्डलिनीशक्तेः प्राकट्यं भवति। कुण्डलिनीविषये उक्तञ्च भगवत्पादेन सौन्दर्यत्महार्याम्।

**[2]महीं मूलाधारे कमपि माणिपूरे हुतवहं**
**स्थितं स्वाधिष्ठाने हृदि मरूतमाकाशमुपरि।**
**मनोऽपि भ्रूमध्ये सकलमपि जित्वा कुलपथम्**
**सहस्त्रारे पद्मे सह रहसि पत्या विहरसे॥**

**[3]सुधाधाराऽऽसारैश्चरणयुगलान्तर्विगलितैः**
**प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नाय महसा।**
**अवाप्य स्वां भूमिं भुजगनिभमध्यष्टवलयं**
**स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि॥**

एतदेव सर्व पशु-पाश-पतिनां विषये वर्णनमस्तिशैवदर्शने इति शम्

1. सौन्दर्यलहरी
2. सौन्दर्यलहरी श्लोकः 9
3. सौन्दर्य लहरी श्लोकः 10

# अनैतिकताप्रशमनी वेददृष्टिः

डॉ. संगीताखन्ना

समन्ताद् भारतदेशनिवासिनः नीत्याः पतितान् तत्पतनोन्मुखांश्च वीक्षामहे। य एष देशः चारित्रशिक्षणाय गुरुरिति प्रथितस्स एवाद्य शोचनीयां दशामापन्नः। **'स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः'**[1] इति खलु भगवान् मनुरब्रवीत्। एतावद् गौरवावहं स्थानमवाप्तवानस्माकं देश इत्यत्र किमन्यत् कारणं स्याद्वेदादृते। वेदस्तु चारित्रशिक्षणायैव प्रवृत्तो महान् शिक्षकः। न केवलं स शिक्षकः किन्तु सखापि। समानं ख्यायत इति 'सखा' भवति। समाजे सख्युः स्थानं विशेषेण परिगण्यते, यदि सः साधुः सखा स्यात्। यद्यपि सखिशब्दस्य साध्विति विशेषणमनर्हमेव, तथाप्याधुनिकरीतिमवलम्बमाना तद्विशेषणं प्रादाम्। आपणेषु 'शुद्धं घृतं लभ्यते' इति फलके लिखितमुपलभामहे। तत्र शुद्धपदं दूषितस्य मिश्रितस्याशुद्धस्य व्यावर्तकमिति तावत्स्पष्टम्, तथा समानख्यानरूपभातृभावविहीनान् सखीन् व्यावर्तयितुं साध्विति न्यवेशयम्। इदानीं तादृशस्सखा भारतेऽस्मासु दुर्लभ इति प्रत्यक्षमनुभवामः। एकस्याः भारतमातुस्सुतास्सन्तोऽपि मिथः कलहायमाना अहिनकुलवद्वर्तामहे। भाषाः प्रान्तान् धर्मांश्चावलम्ब्याधः पतनोन्मुखा आस्महे। तदत्र किं कारणमिति भगवान् वेदपुरुष उपदिशति-

**यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागोऽस्ति।**
**यदीं शृणोत्यलकं शृणो न हि प्रवेद सुकृतस्य पन्थाम्॥**[2]

यः परमार्थोपदेशकत्वनै सखायं स्वपालयितृत्वेनाध्येतारम्, स्वसखित्वेन जानन्तं वेदं त्यजति, न तस्य वाचि ग्राह्योंऽशः कश्चिदस्ति। यदयं त्यक्तवेदः पुरुषो वेदातिरिक्तं शृणोति वृथा तच्छृणोति यतस्स न सुकृतस्य पन्थानं वेद इति मन्त्रार्थः।

परस्परं विद्वेषवैमनस्यादिकं परित्यज्य समभावनया सौहार्दभावनया सहास्तित्वभावनया वर्तितव्यमिति निष्ठायां मानवान् **'पुमान् पुमांसं परिपातु विश्वतः'**[3] इत्यादेशेन स्थापयन्ति वेदाः। तत्र उपदेशास्सन्ति-

**संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्**
**देवा भागं यथापूर्वे संजानाना उपासते।**

---

1. मनुस्मृतिः 2/20
2. ऋग्वेदः 8/2/24/6
3. ऋग्वेदः

**समानो व आकूतिः समाना हृदयानि वः**
**समानमस्तु वो मनो यथा वः सुसहासति॥**[4]

परस्परं विश्वासभाजः जनाः स्वकर्मणि प्रवृत्ताः सफलमनोरथाः सुखेन कालं यापयेयुरिति भावः। एवं यजुर्वेदे-

**मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे**
**मित्रस्य चक्षुषा समीक्षामहे॥**[5]

अपि च गीतायाम्

**समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।**[6]

इत्येवंविधा अनेके सन्दर्भाः प्राप्यन्ते, येष्वस्माकं सनातनधर्मः परिलक्ष्यते। वैदिकधर्मः पृथिव्यामादिधर्मो जनेषूदात्तभावनया सह कर्तव्यबोधं जनयति। येन सुनियन्त्रितं लोकचरित्रं भारतस्य विश्वस्मिन्नादर्शस्थानीयमासीत्। क्व गतं तत्स्थानम्? क्व गतं तन्महत्त्वम्?

यतःप्रभृति वेदाध्ययनाध्यापनपरम्परातो वयं विच्युताः, तत आरभ्य नैतिकपतनोन्मुखा अभवाम। इदानीं सर्वथा तादृशपरम्परालोपेन दुस्सहं कष्टमनुभवामः। आर्द्रकभक्षणव्यापृताश्शाखामृगा इव वयमास्महे। एवं तैत्तिरीयारण्यके-

**तं योऽनूत्सृजत्यभागो वाचि भवति।**
**अभागो नाके भवति।**[7]

इति सन्दर्भ उपलभ्यते। अनेनापि सन्दर्भेण पूर्वोक्त एवार्थो ज्ञायते। यो वस्तुतस्सखा तस्मै न द्रुह्येदित्यर्थमस्मान् ग्राहयत्ययं मन्त्रः। इदमेव मूलमवलम्ब्य वैयासिकं वचनं प्रवृत्तम्-

**पुराणं मानवो धर्मस्साङ्गो वेदश्चिकित्सितम्।**
**आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतिभिः॥**[8]

इति। अनेन वेदोऽस्माकं महान् शिक्षक इति प्रत्येतुं शक्यते। शिक्षकानेव हन्तुमुद्यतेष्वस्मदपत्येषु नैतिकपतनं विना किमन्यत्स्यात्? शिक्षकस्यानुशासने वर्तितव्यमन्तेवासिभिरिति समीचीनः पन्थाः। तं पन्थानमुत्सृज्यान्यं पन्थानमाश्रित्य गच्छामो वयम्। अत एव स्खलद्गतयस्स्मः।

---

4. ऋग्वेद 10/191/4
5. यजुर्वेदः 38/18
6. गीता 9/29
7. तैत्तिरीयारण्यकम् 2/15
8. व्यासवचनम्

लोकयात्राव्यवस्थायै कस्याश्चन विद्याया आवश्यकतेत्यत्र मन्ये न कोऽपि विप्रतिपद्येतेति। सा च विद्या साङ्गो वेद एव। नहि भारताभिजनानामार्याणां वेदादपि पूजिततर कश्चिदन्योऽस्ति। लोके शब्दार्थयोरुपसर्जनप्रधानभावः कामं स्यात्, किन्तु वेदे शब्दार्थयोस्समं प्राधान्यं शास्त्रविद्भिरुपादितम्। समप्राधान्ये सति उच्चारणक्रियया श्रेयस्साधनत्वं वेदस्य तदर्थानुष्ठानद्वारा च तस्य श्रेयस्साधनत्वं प्रतीयते। तत्र अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।

**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम।।**[9]

इति मन्त्रः - हे अग्ने- त्वं राये धनाय अस्मान् दोषरहितेन समीचीनमार्गेण नय इत्यर्थं प्रतिपादयन् अस्मान् ग्राहयतियद्धनोपार्जनमुत्कोचग्रहणादिदूषितमार्गेण न कर्तव्यमिति। सम्प्रति तु शिक्षणसंस्थाने प्रवेशोऽपि उत्कोचदानेन विना दुर्लभमित्यनुभवामः। अयञ्च व्याधिरधस्तलादारभ्योपरितलपर्यन्तं व्याप्तः। तदत्र कारणं वेदमार्गाच्च्युतिरेवेति मन्ये।

'अथ यदि ते कर्मविचिकित्सा वृत्तचिकित्सा वा स्यात् ये तत्र ब्राह्मणसम्मर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामास्स्युः, यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः, एष आदेशः।[10] इत्यादिशन् वेदः कर्मणि चरित्रे वा विचिकित्सायां सत्यां निर्लोलुपानां चिरन्तनानां मार्गानुवर्तनं श्रेय इत्युपदिशति इममादेशमुल्लङ्घ्य यथेच्छं स्वातन्त्र्येण प्रवर्तमानान् लोकाननुभवामः।

अद्यतनेषु दिनेषु प्रत्यहं वार्तापत्रद्वारेण अन्यप्रसारमाध्यमेन च जानीमो यद् नवोढ़ा वध्वो बालाश्च म्रियन्ते मार्यन्ते चेति। इतोऽपि दुःखजनकं कर्मान्यत् किमिव स्यात्।

**'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः'**[11] इति खलु नीतिः। इदं मरणं मारणं वा किं प्रयुक्तं भवेत् ऋते धनलोभात्। कुत्रचिदिच्छास्वातन्त्र्यं कुत्रचिद्वासनाजनितगर्हितकामप्रवृत्तिरपि कारणं ज्ञायते। न खल्विदं मानवोचितं कर्म भवितुमर्हति। महदिदं सामाजिकप्रदूषणम्। **'पत्नी हि सर्वस्य मित्रम्'**[12] इत्युपदिशन् वेदः पत्नीं मित्रत्वेन परिगणयति। **'ञिमिदा स्नेहने'** इत्यस्मात् क्तप्रत्ययान्तो मित्रशब्दः सखिशब्दस्य सुहृच्छब्दस्य च पर्यायतया कोशेषु परिगण्यते। समानं ख्यानं शोभनं हृदयञ्च यस्य वर्तते तत्र मित्रशब्दः पर्यायेण वर्तत इति ज्ञायते। तादृशमित्ररूपायाः पत्न्याः सम्प्रतीदृशी दशा। **'अर्थो हि कन्या'**[13] इति कालिदासोक्त्या कन्याया अर्थरूपत्वं द्वितीयपुरुषार्थरूपत्वं प्रतीयते। तादृशार्थे प्राप्तेऽपि द्रव्यलोभात्तन्मारणे लोकाः प्रवर्तन्त इत्यहो सुमहत्कष्टं भारताभिजनस्य। तदत्र कारणं वैदिकमार्गाच्च्युतिरेवेति पश्यामि। किञ्च 'पत्नी' शब्दः **'पत्युः यज्ञे संयोगो यया'** इति व्युत्पत्त्या पतिकर्तृकद्वितीयपुरुषार्थोपार्जनकर्मणि साहाय्यमाचरतीत्यर्थबोधकः। इममेवार्थं बोधयितुं **'पत्नी हि सर्वस्य**

---

9. तैत्तिरीयसंहिता 1/1/14
10. तैत्तिरीयोपनिषद्
11. मनुस्मृतिः 3/56
12. तैत्तिरीयसंहिता 6/2/9/2
13. अभिज्ञानशाकुन्तलम् 4/24

मित्रम्' इति वेदसन्दर्भः प्रवृत्तः। दाम्पत्यानुकूलत्वे सति हि धर्मार्थकामाः सुपुष्टा भवन्ति। तत्र मनुसम्मतिः—

**यदा भार्या च भर्ता च परस्परवशानुगौ।**
**तदा धर्मार्थकामानां त्रयाणामपि सङ्गतम्।।**[14]

अयमुपदेशस्स्पष्टरूपेण दाम्पत्यसम्बन्धस्य गौरवं व्यनक्ति, तथापि तन्मारणे लोकानां प्रवृत्तिर्हृदयविदारिका। एतादृशार्थस्यापरिज्ञानमूलकमेवेदं प्रदूषणं समाजे विलोक्यते।

वेदरक्षायै प्रवृत्तेष्वपि व्याकरणादिषडङ्गेषु भट्टपादाः स्वीये तन्त्रवार्तिके **'शिष्याचार्यसम्बन्धो हि महान् वेदरक्षाहेतुः'**[15] इति प्रतिपादयन्तोऽध्ययनाध्यापनपरम्पराया एव महत्त्वमभिप्रयन्तीति गम्यते। अस्याः परम्पराया विच्छेदादेव नैतिकपतनं दरीदृश्यतेऽनुभूयते च।

किञ्च वेदश्शब्दप्रधानोऽर्थप्रधानश्चेति वागवोचत। तत्रोच्चारणे कतिपयानां नियन्त्रणे कृतेऽप्यर्थावबोधे समेषामेव वर्णानां जातीनां प्रवेशो वर्तते। यङ्कञ्चन पुरुषमादाय वेदो न प्रवृत्तः। स्त्रीपुंव्यक्तीनां सर्वासामर्थावबोधेऽधिकारः स्वीकृतः। तत्र त्रैवर्णिकानां पुरुषाणामुपनीतानामेव तदुच्चारणेऽधिकारः स्थिरीकृतः। तदुच्चारणावसरे समाजे विद्यमानानां सर्वेषामेवोपकारलाभ इत्यपि शास्त्रकारेण निर्णयः कृतः। वेदगतान्यक्षराणि पञ्चधा विभज्य अनिलाग्निमहीन्द्वर्का इति शिक्षासूत्रेण पञ्चदेवताः परिगणिताः। एतासु देवतासु कामपि अनभिलषन्पुरुषो वर्तेत इत्यभ्युपगन्तुं न शक्यते। एतासां देवतानां स्मरणेनाधिकारिणः मन्त्रानुच्चारयेयुः। मन्त्रगताक्षराधिष्ठितदेवताः प्रसन्नाः भूत्वा यथा जना ईतिबाधाविरहिणो भवेयुः तथा कुर्युः। सम्प्रति नानाविधा ईतिबाधाः प्रकृतिप्रकोपेण तदा तदा समुद्भूता अनुभवामः। तत्र च कारणमिदमेव मन्ये यदधुना प्रक्कालात् प्रवृत्ताध्ययनाध्यापनपरम्परा लुप्तेति। प्रकृतेर्नियन्त्रणं भौतिकविज्ञानद्वारा नहि शक्यम्। तत्र चेतनाविज्ञानमेव समर्थं भवितुमर्हति। इदञ्च चेतनाविज्ञानं वेदैरेवाभिगन्तुं शक्यम्। अनिलस्य अग्नेः वसुन्धरायाः इन्दोः सूर्यस्य च प्रकोपो यदि न स्यात्तर्हि ईतिबाधनामवसरोऽपि न स्यात्। तदस्मान्मार्गाद्वयं विच्युतास्स्मः। अत एव च भूयसां कष्टानां क्लेशानामनुभवं कुर्वन्ति सामाजिकाः। अवर्षणमतिवर्षणमववर्षणमित्यादीनि वेदमन्त्रैर्निरोद्धुं शक्यन्ते, परं तत्र नियतवेदाध्ययनकर्तृणामावश्यकता भवति। वेदाध्ययने सन्ति भूयांसो नियमास्तादृशनियमानां परिपालनपुरस्सरमधीतवेदैरुच्चारितमन्त्रद्वारा सर्वस्य जगतः कल्याणं सम्पादयितुं शक्यम्। इदन्तु नूनं स्वीकर्तव्यं भवति यद् दैव्या सम्पदा विना केवलं पुरुषकारेण प्रकृतिनियन्त्रणं सम्पादयितुं दुश्योक्यम्। पुरुषकारापेक्षया दैव्याः सम्पदः प्राबल्यमिति वेदा उपदिशन्ति। तस्याः सम्पादने सम्प्रति कोऽप्युपायो भारतवर्षे न प्रचलति। अत एव भ्रष्टाचाराणां दुराचाराणां प्रवृद्धिरनुभूयते। यद्यपि वेदान् अध्येतुं सर्वे वाञ्छन्ति, किन्तु स्वस्वाधिकारं न परिशीलयन्ति। विनापि वेदाक्षराणामध्ययनेन तदर्थज्ञानेनैव तादृशं फलमवाप्तुं शक्येत तर्ह्यनधिकृते कर्मणि कुतो यत्नः

14. मनुस्मृतिः 3/61
15. तन्त्रवार्तिकम्, पृ. 262, पूनासंस्करणम्

कर्तव्यः। 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद'[16] इति वेदवाक्येनोश्वमेधानुष्ठानं मृत्युब्रह्महत्यातरणफलकं प्रतिपाद्य इदमपि प्रतिपाद्यते – योऽश्वमेधप्रकरणस्यार्थं जानाति सोऽपि तद्त्फलं प्राप्नोतीति। महाप्रयाससाध्यमनुष्ठानं विना अल्पप्रयाससाध्येन तदर्थज्ञानेन सिद्धे कार्ये किमर्थमनुष्ठाने प्रयासः कर्तव्यः। तथैव वेदाध्ययनं कृच्छ्रेण तपसा कर्तव्यं भवति तदर्थज्ञानञ्च लघुनोपायेन साधयितुं शक्यते। एतेनाध्ययनस्यान्यथासिद्धत्वं न शङ्कनीयम्। वेदाध्ययनस्यासाध्यत्वे प्राप्तविकल्पस्यनुगुण्ये को वा ततो विरज्येतेत्यधिकारिभेदेन व्यवस्था कर्तव्या भवति। अत आधुनिकविज्ञानसाधनानि सम्यक् सम्पाद्यन्ताम्, किन्तु इदमेकं विज्ञानान्तर्गतमिति मत्वा शिक्षाधिकारिणस्तत्तदधिकारानुरोधेन वेदाध्ययनपरम्परां परिचालयेयुर्यदि, तर्हि देशः क्षेमसुभिक्षस्स्यात्, नैतिकपतनस्य चावसरो न स्यादिति विश्वसिमि।

---

16. (क) मीमांसा शाबर भाष्यम्,1/2/4
(ख) तैत्तिरीय संहिता 5/3/12/1-2

# मीमांसान्यायानां पर्यावरणस्वास्थ्यसंरक्षण उपयोगः

डॉ. प्रभाकरप्रसादः

नमः प्रमाणभूताय कवये शास्त्रयोनये।
प्रवृत्ताय निवृत्ताय निगमाय नमो नमः।।

अलौकिकश्रेयस्साधनताको धर्मः वेदैकवेद्यः[1] इति सिद्धान्तं मनसि निधाय कथं वेदात् प्रसिद्ध्यति धर्म इति निरूपणार्थ प्रवृत्तं शास्त्रं मीमांसाशास्त्रम्। "[2]धर्मे प्रमीयमाणे तु वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यतीति" स्वीकारात्। एवञ्च मीमांसाशास्त्रं वेदप्रतिपाद्यो धर्मोऽयमेवार्थादेवमनुष्ठाने धर्मत्वम् नान्यथेति यागादीनां स्वरूपं विवेचयति। अतो यद्यपि पर्यावरणस्वास्थ्यस्य शास्त्रेणानेन सह न साक्षात्सम्बन्धस्तथापि मीमांसान्यायैः यथानिर्णीतं तथा धर्मानुष्ठानं क्रियते चेत्तेन पर्यावरणस्य स्वास्थ्यस्यापि रक्षणं भवतीति मीमांसान्यायानामवलोकनेन ज्ञायत इति प्रतिपादनार्थं लेखस्यास्य प्रवृत्तिः।

स्वास्थ्यात्प्रच्युतिर्हि दुःखस्य कारणमिति[3] सर्वत्र सम्मतम्, आध्यात्मिके भवतु लौकिककार्ये वेत्युभयत्र समानमेतत्। अतः स्वास्थ्यस्य संरक्षणं हि सर्वैरवश्यं कार्यम्। पर्यावरणस्य स्वास्थ्यं संरक्षितं भवति चेत्तदा मानवानां कल्याणम्।

अतः पर्यावरणस्य स्वास्थ्यस्य संरक्षणार्थमिदानीन्तनैः प्रयत्यत इत्यस्माकं प्रत्यक्षम्। प्राचीना वैदिका अप्यत्र जागरूका आसन्निति लेखनेह प्रतिपाद्यते।

मीमांसाशास्त्रमिदं प्रमाणभेदशेषत्वप्रयुक्तिक्रमाधिकारातिदेशोहबाधतन्त्रप्रसङ्गनिरूपणपरैः द्वादशाध्यायैः स्वरूपप्रमाणसाधनफलैः धर्मं विवेचयतीत्युक्तमेव। तत्र विशेषतः प्रयुक्त्यध्याये प्रतिपादितानां न्यायानां विचारे कर्मानुष्ठानेऽक्षरशः वेदस्य प्रामाण्याभ्युपगमपुरस्सरं पर्यावरणस्यापि हानिर्यथा न स्यात्तथा विवेचितमिति ज्ञायते। अत्र केषाञ्चन न्यायानां स्वरूपं विविच्यते- तत्र प्रथमाधिकरणे क्रत्वर्थपुरुषार्थयोर्जिज्ञा-सायाः प्रतिज्ञा कृता "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे-[4]" ति। तदनु द्वितीयेऽधिकरणे "ब्राह्मणः प्रतिग्रहादिना द्रव्यमर्जयेत् जयादिना राजन्य"[5] इत्यादिविधिभिः ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य क्षत्रियस्य जयादिना वैश्यस्य कृष्यादिना शूद्रस्य च सेवादिनेत्येवं द्रव्यार्जननियमः श्रुतः, स क्रत्वर्थ उत पुरुषार्थ इति विचार्यते। तत्र पुरुषार्थत्वे नियमस्यार्थवत्त्वं न स्यादतः क्रत्वर्थमेव द्रव्यार्जनं विधीयते इति पूर्वपक्षे प्राप्ते द्रव्यार्जनस्य सर्वस्य क्रत्वर्थत्वे जीवनयात्रानिर्वाह एव न स्यादतः पुरुषार्थत्वमेव युक्तमिति

1. "चोदनालक्षणोऽर्थो धर्मः" मी. द. 1.1.2 इत्यनेन धर्मलक्षणपरेण सूत्रेण धर्मस्य वेदैकवेद्यत्वं बोध्यते।
2. श्लोकवार्त्तिकम्- 1.1.1
3. "तदा द्रष्टुः स्वरूपेऽवस्थानम्" योगदर्शनम् 1.2. इति सूत्रेण स्वरूपेऽवस्थितिरेव मोक्ष इति स्वीकारात् स्वास्थ्यात्प्रच्युतिर्दुःखस्य कारणमिति सिद्ध्यति।
4. जै. मी. द. 4.1.1
5. शास्त्रदीपिका 4.1.2

सिद्धान्तः। एवञ्च श्रुत्याद्युक्तनियमेन द्रव्यार्जनेन जीवनयात्रानिर्वाहः धर्माय भवति प्रकारान्तरेण तु जीवननिर्वाहः अधर्मायैवेति ज्ञायते। जीवनयात्रानिर्वाहः एवमेवमिति श्रुत्युक्तनियमानुसारेण सर्वैः क्रियते चेत् समाजस्य सुस्थितिर्भवतीति मीमांसकानां तात्पर्यम्। अत्र निबन्धे प्रयुक्तिलक्षणे स्थितानां सर्वेषां न्यायानां विचारो न क्रियते, अपि तु पर्यावरणस्य स्वास्थ्यस्य संरक्षणविषयेण सह सम्बद्धानां केषाञ्चन न्यायानामेव विचारः प्रस्तूयते। अत्र सप्तमे पश्वेकत्वाधिकरणे "पशुना यजेत"[6] इति वाक्ये किं पशुगतमेकत्वं विवक्षितं न वेति विचारितम्। "तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वाद्[7]" इति सूत्रेण यागक्रियायामङ्गत्वेन पशोरेव विवक्षा, न तु तद्गतसङ्ख्यायाः, यथा "ग्रहं सम्मार्ष्टि[8]" इत्यत्र ग्रहगतमेकत्वं न विवक्षितमिति पूर्वपक्षे प्राप्ते "शब्दस्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथान्येषाम्[9]" इति सूत्रेण पशुगतमेकत्वं विवक्षितमेवेति सिद्धान्तितम्। अत्र "ग्रहं सम्मार्ष्टि" इत्यत्रैकत्वं न विवक्षितम्, प्रकृते तु विवक्षितमिति स्वीकारे को नियम इति चेद् ग्रहस्योद्देश्यत्वादुद्देश्यगतसङ्ख्याया विवक्षा न भवति, प्रकृते पशोः विधेयत्वाद्विधेयगतसङ्ख्याया विवक्षा भवतीति नियमः स्वीक्रियते। यतः उद्देश्यञ्च प्रधानं भवति, "ग्रहं सम्मार्ष्टि" इत्यत्र ग्रहमिति द्वितीयानिर्देशात् प्रयोजनवत्त्वाच्च सम्मार्गं प्रति ग्रहस्य प्राधान्यमवगम्यते, सम्मार्गश्च गुणभूतः। प्रतिप्रधानं गुणावृत्तिरिति न्यायेन वाक्यभेदः स्यात्। यतोऽत्र ग्रहैकत्वे प्रधानभूते इति ग्रहैकत्वाभ्यां प्रत्येकं कर्मकारकस्यान्वयः। ग्रहविशिष्टकर्मकारकयुक्तः सम्मार्गः, एकत्वविशिष्टकर्मकारकयुक्तः सम्भार्गः इति सम्मार्गविधौ विध्यावृत्तिलक्षणो वाक्यभेदः स्यादतः ग्रहागतमेकत्वं न विवक्षितमिति स्वीक्रियते।'' पशुना यजेत ''इत्यत्र तु तृतीयाविभक्तिः करणकारकमेकत्वञ्च बोधयति। प्रातिपदिकन्तु पशुद्रव्यं बोधयति। अत्र प्रातिपदिकार्थः पशुः प्रत्ययार्थं एकत्वञ्च तृतीयाकारकेण प्रधानीभूतेनान्वयं प्राप्नुतः। ततः प्रधानक्रियायामन्वयः। एवञ्च प्रधानभूतञ्च कारकं गुणभूते पश्वेकत्वे वशीकृत्य यागक्रियायामन्वेतीति सिद्ध्यति। यागक्रिया च विधावन्वेति। प्रति प्रधानं गुणावृत्तिरिति नियमः न तु प्रतिगुणं प्रधानावृत्तिरिति। अतः प्रकृते प्रत्ययार्थत्वेन प्रधानभूतं[10] तृतीयाकारकं पश्वेकत्वं वशीकृत्य प्रधानक्रियायामन्वयं प्राप्नोतीति। गुणानुरोधेनावृत्तेरभावाद् वाक्यभेदस्य नास्ति प्रसक्तिः। तथा च पशुगतमेकत्वं विवक्षितमेवेति पशुभ्यां पशुभिर्वा कृतोऽयं यागः पापायैवेति सिद्धान्तः। एवञ्चात्र ''पशुना यजेत'' इति वाक्यमाश्रित्य यथेष्टं पशूनां प्रयोगो न कर्तव्य विधेयस्य द्रव्यस्य सङ्ख्याया विवक्षास्तीति यावन्मात्रं द्रव्यं यागाङ्गत्वेन विहितन्तावन्मात्रमेव द्रव्यं विनियोज्यमिति सिद्ध्यति।

एतदधिकरणनिर्णयमाश्रित्य कपिञ्जलाधिकरणे एकादशाध्याये प्रथमपादे षष्ठेऽधिकरणे ''वसन्ताय कपिञ्जलानालभेत''[11] इत्यत्र बहुवचनस्य पश्वेकत्वाधिकरणन्यायेन विवक्षितत्वाद् बहुवचनस्य सर्वत्र वृत्तेः त्रिप्रभृतीनामसङ्ख्यानां सर्वसङ्ख्यानां शास्त्रार्थत्वम्, शास्त्रीयात् प्रयासगौरवात् फलभूयस्त्वं

---

6. जै. मी. द. 4.1.15
7. जै. मी. द. 4.1.11
8. शास्त्रदीपिका 3.1.4
9. जै. मी. द. 4.1.15
10. प्रकृतिप्रत्ययाविति स्मृत्या प्रातिपदिकार्थापेक्षया विभक्त्यर्थस्य प्राधान्यावगमात् (मी. न्या. प्र. सा. विवेचिनी टीका पृ. सं 10) अनेन प्रकृत्यर्थस्य प्राधान्यमवगम्यते।
11. जैमिनीयन्यायमाला 11.1.6

काम्यकर्माधिकरणन्यायसिद्धमिति यथेष्टं कपिञ्जलानालभेत इति पूर्वपक्षे प्राप्ते कपिञ्जलान् इत्यत्र बहुत्वमात्रं शब्दार्थः बहुत्वञ्च यो हि त्रीनालभते यश्च सहस्रमालभते उभयत्राविशिष्टम्, तथाच त्रीननालभ्य चतुर्ण्णामालम्भस्यासम्भवादवश्यं त्रय आलब्धव्या एव, तावता च शास्त्रार्थे सिद्धे शास्त्रमधिकमालम्भं न बोधयति। निवृत्तव्यापारे च विधौ "मा हिंस्यात् सर्वा भूतानि"[12] इति निषेधशास्त्रमधिकालम्भस्य प्रत्यवायजनकत्वं बोधयतीति कपिञ्जलान् इत्येवं बहुवचनान्तविषयबोधकेषु वाक्येषु बहुवचनेन त्रित्वमेव विधीयत इति प्रतिपादितम्। अनेनेदं सिद्धं भवति यत् केवलं बहुवचनान्तविधेय-बोधकवाक्यमाश्रित्य यथेष्टं बहूनां कपिञ्जलानामालम्भः शास्त्रसम्मत इति वक्तुं न शक्यते अपि तु कपिञ्जलत्रयस्यैवालम्भः शास्त्रसम्मत इति। तेन च एतन्नयाभावे आपाततः "वसन्ताय कपिञ्जलानालभेत" इति वाक्यमाश्रित्य बहूनां कपिञ्जलानामालम्भे याज्ञिकानां प्रवृत्तिः स्यादिति तद्वारणेनतज्जनितपर्यावरणस्य होनेर्वारणं भवतीति पर्यावरणस्य स्वास्थ्यस्य संरक्षणे मीमांसान्यायानां भूमिका दृष्टिपथमायाति। एवमत्रैव प्रतिपत्तिलक्षण्यां द्वादशाधिकरणे विचारितम्- "अग्नीषोमीयं पशुमालभेत"[13] इति श्रुतेः पशुयागप्रकरणे" हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः[14] इत्यादौ श्रुतम्, शकृत् सम्प्रविध्यति लोहितं निरस्यति" इति चाग्रे श्रुतम्। अत्र पश्वालम्भस्य प्रयोजकं किं हृदयाद्यवदानमुत शाकृल्लोहितमपि इति संशये हृदयादिवाक्ये शकृदादिवाक्ये च पशुपदस्याभावात् प्रकरणस्य सन्निधश्चोभयत्र समानत्वादुभयमपि प्रयोजकमतः केनचित्कारणे शकृल्लोहितयोरपचारे पुनः पश्वालम्भपुरस्सरं शकृल्लोहितनिरसनं कार्यमन्यथा विहिताङ्गाकरणजन्यदोषेणाङ्गिनो यागस्य फलजनकत्वं न स्यात् चोदनैकवेद्यत्वाद्धर्मस्येति पूर्वपक्षे प्राप्ते उच्यते पशोः स्वरूपं विशसनादिना नष्टमिति पशोः साक्षाद्यज्ञसाधनत्वं न सम्भवति किन्तु हृदयादिहविःप्रकृतितयैवेति अवश्यं वक्तव्यम्। "हृदयस्याग्रेऽवद्यति" इति हृदयवाक्येऽवदानसंयोगाद् हृदयादीनां हविष्ट्वं ज्ञायते, शकृल्लोहितवाक्ये च तदभावाद् हविष्ट्वं नास्तीतिनिश्चीयते। अतः तयोः हविष्ट्वाभावादेव पशोः प्रयोजकत्वं नास्तीति शकृदाद्यपचारे पश्वन्तरं न सम्पाद्यमिति सिद्ध्यति। एवञ्च शकृल्लोहितनिरसनकर्म प्रतिपत्तिमात्रमिति तद्वाक्यं प्रमाणीकृत्य पश्वन्तरालम्भो न कार्य इति मीमांसान्यायानां पर्यावरणस्य स्वास्थ्यस्य संरक्षणे महानुपकारो ज्ञायते। अत्र न्यायत्रयस्य सङ्गमनं भवति, तृतीयाध्याये चतुर्थपादे पञ्चदशाधिकरणेऽवदानं हविः संस्कारार्थमिति निर्णीतम्। दशमाध्याये सप्तमपादे प्रथमेधिकरणे च हृदयादिवाक्येष्ववदानसंयोगादेवतोद्देशेन त्यज्यमानत्वलक्षणं हविष्ट्वं हृदयादीनामेव न तु साक्षात्पशोरिति निर्णीयते।[15] अत्र च चतुर्थेऽध्याये हृदयादीनामेव हविष्ट्वेन पश्वालम्भस्य प्रयोजकत्वं निश्चीयते। एवमग्नीषोमीयं पशुमालभेत इति वाक्ये पशुगतैकत्वस्य विवक्षितत्वात् हृदयाद्यवदानार्थं पश्वेकस्यालम्भ एव शास्त्रसम्मत इति निश्चितं भवति। एतद्विचाराभावे बहूनां पशूनामालम्भः पर्यावरणस्य स्वास्थ्यस्य संरक्षणे प्रतिबन्धको भवेदतः मीमांसान्यायानां पर्यावरणस्वास्थ्यसंरक्षणेन सह सम्बन्धो नितरां सिद्ध्यति।

एवं चतुर्थाध्याये द्वितीयपादे सप्तमेऽधिकरणे प्रतिपत्तिकर्मणां महत्वं प्रतिपाद्यते-उपयुक्तस्य विहितस्थले प्रक्षेपोऽपि उपयुक्तद्रव्यस्य सत्कारात्मकं संस्कारकर्मतदन्यथाकरणे क्रतोरेव वैगुण्यापत्तिरिति

---

12. शास्त्रदीपिका 11.1.6
13. " " 4.1.12
14. तत्रैव 4.1.12
15. यागार्थः पशुरुत्पन्नः हविः प्रकृतिभावतः। हवींषि हृदयादीनि तैरेवातः प्रयुज्यते।। शा. दी 4/1/3

अत्र प्रतिपादितम्। तथाहि-''कृष्णविषाणया कण्डूयते''[16] इति कण्ड्नस्य साधनत्वेन कृष्ण विषाणाया विधानं श्रूयते। ''चात्वाले कृष्णविषाणां प्रास्यति''[17] इति चात्वाले कृष्णविषणायाः त्यागः क्रतुमध्य एव विहितः। अत्र कृष्णविषाणायाः चात्वाले त्यागः अर्थकर्म उत प्रतिपत्तिरिति विचार्यते। पूर्वपक्षस्तावत् कृष्णविषाणायाः चात्वाले त्यागः अर्थकर्मैव निवृत्तव्यापारे संस्कारः किं करिष्यति, यतः द्रव्यस्य संस्कारः किमर्थमिति विचारे द्रव्यस्वरूपे संस्कारेण कोऽपि विशेषो जन्यत इति वक्तुं न शक्यते, प्रमाणान्तरेण बाधात् अवघातैः सम्पादितेषु नखविदलनादिभिर्वा सम्पादितेषु तण्डुलेषु कोऽपि विशेषो दृग्गोचरो न भवतीति सर्वेषां प्रत्यक्षसिद्धम्। अतः द्रव्यकार्यार्थ एव संस्कार इति वक्तव्यम्। तथा चोपयोक्ष्यमाणद्रव्याणां संस्कारस्तु युज्यते, उपयुक्तानां द्रव्याणां संस्कारेण किं प्रयोजनं स्यादतः विषाणायाः चात्वाले त्यागोऽर्थकर्म एव, एवमिडाभक्षणम् स्विष्टकृद्यागादिकमप्यर्थकर्म एवेति पूर्वपक्षे प्राप्ते सिद्धान्तोऽभिहितः। उपयुक्तानामपि द्रव्याणामनादरो न युक्तः। द्रव्याणामुपयोगानन्तरं किमिदं द्रव्यं देशान्तरं नेयमुत यथेष्टं विनियोज्यमथवोपेक्ष्यमितियज्ञदेश रिक्ततार्थं जिज्ञासायां द्रव्यं प्रतिपत्तिम पेक्षते। प्रतिपत्तिर्नाम सत्कारः। निष्पन्नस्यापि कार्यस्य तदीयद्रव्यप्रतिपत्त्या सम्भवत्यतिशयः। प्रतिपत्तिलोपे च निर्वृत्तमपि प्रयोजनं विपद्यते[18] इति प्रतिपत्तिविधानबलादेव कल्प्यते। यथा लोके महाराजप्रदत्तप्रसादस्य सत्कारे कृते महाराज आत्मान सत्कृतं इति मन्यते। अकृते च सत्कारे यत्र कुत्रापि निक्षेपे महाराजः 'कुप्यति, महाराजेनोपयुक्तं माल्यादिकं प्रसादरूपेण दत्तमपि यथा प्रतिपत्तिमपेक्षते तथा निष्पन्नमपि कर्म स्वकीयस्योपयुक्तस्यापि द्रव्यस्य प्रतिपत्तिमपेक्षते अर्थात् निष्पन्नमपि कार्यमतिशयजनने समर्थं न भवति। अत्र दृष्टान्ते महाराजतोषादिकं स्वकीयोपयुक्तद्रव्यस्य सत्कारस्यावश्यकत्वं बोधयति दार्ष्टान्ते तु प्रतिपत्तिविधानमेव तत्र प्रमाणम्। एवञ्च प्रतिपत्तिकर्मणामपि महत्त्वं मीमांसकैरर्थकर्मवदेव स्वीकृतम् तेन ज्ञायते उपयुक्तानामपि द्रव्याणां यत्र कुत्रापि यथेष्टं प्रक्षेपादिकं न कार्यम्, किन्तु तेषामपि यथाविहितं तथैव विनियोगः कार्यः, अन्यथाकरणेन तु निष्पन्नमपि कार्यं विपन्नमेवेति ज्ञेयमिति। अनेन पर्यावरणस्य स्वास्थ्यस्य संरक्षरणे मीमांसकानां महानादरः स्पष्टो भवति। लौकिककर्मस्वपि न्यायोऽयमनुपाल्यते चेत् उपयुक्तद्रव्याणां यत्र तत्र प्रक्षेपेण जायमानानां पर्यावरणदूषणानां वारणं कर्तुं शक्यते। न चैतदस्माभिरपि ज्ञातुं शक्यत एव यदुपयुक्तानां द्रव्याणां समुचितविनियोगेन पर्यावरण प्रदूषणवारणं भवति इति किमर्थमेतदर्थं मीमांसान्यायानां मुकुटे धारणमिति वाच्यम्, सत्यमिदं बुद्धिमता ज्ञातुं शक्यते एवेति नैतदर्थं मीमांसान्यायानां मुकुटे धारणमपेक्षितम् तथापि मीमांसान्यायानामवलोकनेनेदं निश्चप्रचं भवति यन्मीमांसकैरनादिकालतः एवमेव यथा पर्यावरणं प्रदूषितं न भवेत्तथैव व्यापृतम् व्याप्रियते च। पूर्वकाले यज्ञादीनामनुष्ठानं सर्वत्र बहुप्रचलितमासीत्। सम्प्रति च क्वचित्क्वचिदेव किञ्चित्किञ्चिद्रूपेण प्रचलतीति कथन्तेषां व्यवहार इति ज्ञानार्थं मीमांसान्याया एव शरणम्। मींमांसान्यायानां मुखेन तेषां व्यवहाराणां ज्ञाने सति यतः एतादृशव्यवहारस्तेषां अतः पूर्वकाले पर्यावरणं दोषमुक्तमासीद् अतः अस्माभिरपि सम्प्रति व्यवहारे ते नियमा अवश्यं पालनीया इति प्रेरणा उत्पद्यते। अतः मीमांसा न्यायानामप्यस्मिन् विषयेऽवलोकनस्य महत्त्वमस्त्यैवेत्यैतावन्मात्रमत्र लेखेन प्रतिपादितम्।

16. शास्त्रदीपिका 4.2.7
17. '' '' '' 4.2.7
18. शास्त्रदीपिका 4.2.7
17. प्रयाजादिकर्मणामिवार्थकर्मत्वं प्रतिपत्तिकर्मणां नास्ति तथापि महत्त्वं तथैवास्तीति भावः (शास्त्रदीपिकामसूखटीका)

# चरित्रनिर्माणे वेदान्तस्य भूमिकायाः विचारः

डॉ. बिष्णुपदमहापात्रः

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टये मोक्षस्य प्राधान्यं सर्वदार्शनिकसम्मतत्वञ्च। स च मोक्षः ब्रह्मज्ञानमन्तरा नैव सम्भवति, ब्रह्मतत्त्वं केवलं सत्यतत्त्वं तदतिरिक्ततत्त्वस्य त्रिकालाबाध्यत्वाभावादसत्यत्वम्। अत एव श्रुतिः वदति **''प्रज्ञानं ब्रह्म''**[1] **''अहं ब्रह्मास्मि''**[2] **''तत्त्वमसि''**[3] **''अयमात्मा ब्रह्म''**[4] इति। एतेषां श्रुतिवाक्यानां तत्त्वमुररीकृत्य तत्तत्त्वविवेचने वेदान्तिनां प्रवृत्तिः। परन्तु तादृशब्रह्मतत्त्वस्य प्राप्त्यर्थं यथा ज्ञानस्योपयोगित्वं तथैव तन्मूलकत्वेन सच्चरित्रस्य सत्संस्कारस्य, सत्समाजस्य, सद्गुरूपदेशस्य सच्छिक्षायाः उपासनायाश्चोपयोगित्वं विद्यते। एतेषां ज्ञानं वेदान्तशास्त्राध्ययनेनैव सम्भवति, नान्यथा। तत्र वेदान्तो नाम वेदानामन्तः अर्थाद् उपनिषत्प्रमाणम्। उक्तञ्च **''वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च''**[5] वेदान्तशास्त्रस्य मुख्यप्रतिपाद्यविषयो भवति ब्रह्म, तद् ब्रह्मतत्त्वमेव सततमुपासनीयम्, तस्योपासनेनैव चरित्रस्य निर्माणमवश्यम्भावि, एतेन **''यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ''** अस्याः श्रुतेश्चरितार्थत्वम्। अस्याः वेदान्तविद्यायाः **अधिकारी** तु विधिवदधीतवेद-वेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरस्सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता'' इति वेदान्तविद्भिः उद्घोष्यते। एतादृशः ब्रह्मज्ञानाधिकारी जन्ममरणादिसांसारिकदुःख-पीडितप्रखरतरतरणिकिरणौष्णपीडितो मनुष्यः स्वक्लेशमपनुनुत्सुः सरोवरमिव उपनिषद्विद्यानिष्णातं गुरुमनुरूपपत्रपुष्पाद्युपहृतिपाणिरुपसृत्य श्रद्धातिशयपूर्वकं तदुपदिष्टमनुसरन्मनसा वाचा कर्मणा च तं वरिवस्यति। स च गुरुर्जिज्ञासवस्मिन्नतिदयालुरध्यारोपापवादन्यायेन ब्रह्मरूपमतिरहस्यमस्मै समुपदिशति। अत्रापि श्रुतिरेव प्रमाणम्, तथा च श्रुतिः **''समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्**[6] **''तस्मै स विद्वानुपसन्नाय प्राह''**[7] इति।

चरित्रनिर्माणे यदि ब्रह्मविद्याप्रतिपादकवेदान्तशास्त्रस्य भूमिका विद्यते तर्हि तत्र चरित्रशब्दस्य कोऽभिप्राय इति जिज्ञासायां धर्मशास्त्रकारो मनुः इत्थं गदति–

1. ऋग्वेदः, ऐत. उप. 5/3
2. यजुर्वेदः, बृह. उप. 1/4/10
3. सामवेदः, छा. उप. 6/8/7
4. अथर्ववेदः, माण्डू. उप. 8
5. वेदान्तसारः, पृ.2, चौ. सं. संस्थानम् - 1988
6. मु.उप. 1/2/12
7. मु.उप. 1/2/3

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥[8]**
**स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च।**
**स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षति॥[9]**

तादृशचरित्रनिर्माणाय धर्मशास्त्रकारैः ब्रह्मचर्याश्रम–गृहस्थाश्रम–वानप्रस्थाश्रम–संन्यासाश्रम–व्यवस्थाभेदात् चतुर्विधाश्रमव्यवस्था कृता, ब्रह्मचर्याश्रमेषु तावदुपनयनसंस्कारानन्तरं गुरोः समीपं गत्वा गुरूपदेशानुसारं ब्रह्मविद्यायाः अध्ययनं कर्तव्यं तेन च सच्चरित्रस्य निर्माणं भवत्येव, अत एव तैत्तिरीयोपनिषत् स्वाध्यायस्य प्रशंसां करोति–

**''ऋतं च स्वाध्यायप्रवचने च, सत्यञ्च स्वाध्यायप्रवचने च, तपश्च स्वाध्यायप्रवचने च, दमश्च स्वाध्यायप्रवचने च, शमश्च स्वाध्यायप्रवचने च, अतिथयश्च स्वाध्यायप्रवचने च, मानुषं च स्वाध्यायप्रवचने च''** इत्यादि।[10]

अत्र प्रवचनमध्यापनं ब्रह्मयज्ञो वा इति तपस्तावत् कृच्छ्रादिः। दमस्तु बाह्यकरणोपशमः। शमोऽन्तः करणोपशमः। मानुषं लौकिकव्यवहारः। एतेषां शास्त्रसम्मतमेवानुष्ठाकर्तव्यम्, तेन चरित्रस्य निर्माणं जायते। अस्मिन् प्रसंगे भगवान् शंकराचार्यो निगदति–

**स्वाध्यायाधीनं ह्यर्थज्ञानम् अर्थज्ञानायत्तं च परं श्रेयः प्रवचनं च तदविस्मरणार्थं धर्मप्रवृद्ध्यर्थं च। अतः स्वाध्यायप्रवचनयोरादरः कार्यः॥[11]**

एतादृशशिक्षासम्पन्नः शिष्यः सततं ऋतं, सत्यं च वदिष्यति, अतिथिप्रियश्च भविष्यति, तेन च परमतत्त्वस्य अवाप्तिः। एतेन स्वाध्यायोऽध्येतव्य इति मीमांसावाक्यं **''त्वमेव प्रत्यक्षं ब्रह्मासि, त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि, ऋतं वदिष्यामि, सत्यं वदिष्यामि''** इत्यादिवेदान्तवाक्यञ्च तमेवार्थं पुष्णाति। अतः वेदान्तवाक्यस्य चरित्रनिर्माणे कारणत्वं विद्यत इति निश्चप्रचं वक्तुं शक्यते।

वेदान्तशास्त्रं न केवलं चरित्रनिर्माणे उपदेशं प्रयच्छति अपि तु चरित्रनिर्माणे शिष्यान् अनुशास्ति। **''सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्।''**[12]

अभिप्रायस्तु अत्र वेदविहितकर्तव्यमुपदिशति श्रुतिः। संस्कारयुक्तः पुरुषः विशुद्धचित्तवशादनायासेन आत्मज्ञाने समर्थो भवति। स्मृतिः वदति–

---

8. मनुस्मृतिः 2/20
9. मनुस्मृतिः 9/7
10. तैत्ति. शिक्षा. नवमोऽनुवाक्।
11. तैत्ति. उ. शां. भा.
12. तै. उप. शिष्यानुशासनम् 19

**''तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते''**[13]

श्रुतिश्च-**''तपसा ब्रह्म विजिज्ञासस्व''**[14] इति।

एतेन ज्ञायते यत् ज्ञानोत्पत्तये कर्म कर्तव्यम्। श्रुतिविहितानुशासनस्य अतिक्रमाद् दोषानामुत्पत्तिः, दोषोत्पत्तौ सति न सच्चरित्रस्य निर्माणं, न वा तत्त्वज्ञानस्योत्पत्तिः, न वा आत्मसाक्षात्कारः, न वा मुक्तिः सम्भवति, ब्रह्मविद्यया अभयस्य प्राप्तिः। न कस्माद् विभेति। शुभकर्मणा सञ्चितपापस्य क्षयो भवति, सत्कर्मणा अधर्मं तीर्त्वा कर्मात्मिकां विद्यामवाप्नोति। तथा च श्रुतिः-

**''अभयं प्रतिष्ठां विन्दते''**[15] **''न बिभेति कुतश्चन।''**[16] **''किमहं साधु नाकरवम्''**[17]

**''अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत्ते''**[18] इति।

श्रीमद्भगवद्गीतायामपि अर्जुनमुपदिशति भगवान् श्रीकृष्णचन्द्रः-

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥**[19]

अस्य श्लोकस्य व्याख्यानावसरे आचार्यशंकर इत्थं वदति-''अन्तःकरणस्य संव्यवहारेषु परवञ्चनमायानृतादिपरिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः। ज्ञानं शास्त्रत आचार्यतश्च आत्मादिपदार्थानाम् अवगमः अवगतानामिन्द्रियाद्युपसंहारेण एकाग्रतया स्वात्मसंवेद्यतापादानं योगः, तयोः ज्ञानयोगयोर्व्यवस्थिति-र्व्यवस्थानं तन्निष्ठता एषा प्रधाना दैवी सात्त्विकी सम्पदिति। एवञ्च मनसा वाचा कर्मणा कदापि कस्यापि हानिः न स्यात् सर्वदा प्रियभाषणम्, अपकारकं पुरुषं प्रति क्रोधो मा भवतु, सर्वभूतेषु दया, आसक्तेरभावः इत्यादिकमपि उपदिशति वेदान्तशास्त्रम्। तथाहि-

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥**[20]

सत्यं वद इत्यादिश्रुतिवाक्यस्य विवेचनावसरे आचार्यशंकर इत्थं भणति यथा प्रमाणावगतं वक्तव्यं तद्वद। तद्वद्धर्मं चर। धर्म इत्यनुष्ठेयानां सामान्यानां सत्यादिविशेषनिर्देशादिति। मातृणां, पितृणां, गुरूणां च कृते कीदृशमाचरणं कर्तव्यं तद्विषयकमनुशासनमपि शिक्षयति इयं ब्रह्मविद्या। तथाहि-

---

13. मनु. 12/104
14. तै. उप. 3.3/2/5
15. तै. उप. 3.2/7/1
16. तै. उ. 2/9/1
17. तै. उ. 2/9/1
18. ई. उ. 6
19. श्रीमद्भगवद्गीता 16/1
20. श्रीमद्भगवद्गीता 16/2

**देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि।** इति। अर्थात् मातृदेवो माता देवो यस्य स त्वं मातृदेवो भव स्याः, एवं पितृदेवः आचार्यदेवो भव। देवतावदुपास्या एते इति आचार्याः प्रवदन्ति शिक्षयन्ति च। दानादिविषयकमुपदेशमपि शिक्षयति ब्रह्मविद्या। कथं देयं, कुत्र देयं, कुत्र न देयमित्यादिशिक्षायाः निर्धारणमपि करोति वेदान्तशास्त्रम्। तथाहि–"**श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयमित्यादि।**"[21] एतादृशीं शिक्षां ब्रह्मविद्या एव प्रदातुं समर्था भवति, नान्या। अत एव अन्ततो गत्वा कथयति "**एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। इति।**" अस्या विद्यायाः श्रद्धया यदि उपासनं क्रियते तर्हि सच्चरित्रस्य निर्माणं सम्भवति। तेनैव ज्ञानस्योदयः ज्ञानोदयाच्च मुक्तिः।

**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति।।**[22]

एतादृशीं शिक्षामपि प्रयच्छति इयं ब्रह्मविद्या। श्रुतिमनुसृत्य लौकिकाः वदन्ति–

**अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।**
**चत्वारि तस्य वर्धन्ते आयुर्विद्यायशोबलमिति।।**[23]

एतेन ज्ञायते ब्रह्मविद्या न केवलं चरित्रनिर्माणे कारणमपि तु चरित्रनिर्माणशिक्षाप्रदानेन सह ब्रह्मतत्त्वप्राप्तये साक्षात् मार्गं प्रदर्शयति प्रेरयति च। अतः अस्याः ब्रह्मविद्यायाः महत्त्वं नितरां स्फुटत्येव। श्रद्धावान् लभते ज्ञानमिति गीतायां उपदेशोऽस्माभिः प्राप्तः, तत्र या श्रद्धा प्रतिपादिता अस्ति सा च सात्त्विकी–राजसी–तामसी चेति त्रिविधा भवति। तत्र सात्त्विकाः देवान्, यक्षरक्षांसि राजसाः, प्रेतादयः तामसाः जनाः यजन्ते। तथाहि–

**यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः।**
**प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः।**[24]

भोजनमपि चरित्रनिर्माणे कारणं भवति। यथा भोजनं भवति तथैव तस्य पुरुषस्य आचरणं भवत्येव। सात्त्विकभोजनेन सात्त्विकप्रवृत्तिः, राजसिकभोजनेन राजसिकप्रवृत्तिः, तामसिकभोजनेन तामसिकप्रवृत्तिश्च जायते। तथाहि–

**आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः।।**

---

21. तै. उ. 2.9.2
22. गी. 4/39
23. हितोपदेशः।
24. गीता 17/4

कट्वम्ललवणात्युष्ण- तीक्ष्णरूक्षविदाहिनः।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः॥
यातयामं गतरसं पूतिपर्युषितं च यत्।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्॥[25]
आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः[26]

एतेन इदमपि वक्तुं शक्यते चरित्रनिर्माणे भोजनविषयकनिर्वचनं ब्रह्मविद्याया अतीव महत्त्वपूर्णं चकास्ति। गृहस्थाश्रमे ये निमज्जिताः सन्ति तेषामपि मोक्षे अधिकारः विद्यते, तेषां कथं मुक्तिस्तद्विषयिणीं शिक्षां प्रयच्छति इयं विद्या।

न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते॥
वनेषु तु विहृत्यैनं तृतीयं भागमायुषः।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान् परिव्रजेत्॥[27]

ब्रह्मविद्यायाः साधनविषयकं यच्चिन्तनं तदतीव मनोहरं चरित्रनिर्माणे च सहायकम्। अतः चत्वारि साधनानि वेदान्तशास्त्रे प्रतिपादितानि। तानि च नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोग-विरागशमादिषट्कसम्पत्तिमुमुक्षुत्त्वानि। अर्थाद् यावन्नित्यानित्यवस्तुविवेको न स्यान्न तावद्वैराग्यम्। वैराग्यमन्तरेण न शमादीनां सम्भवः। तदसम्भवे च न मोक्षविषयिणीच्छा। तां विना न ब्रह्म जिज्ञासा। विवेकविरागशमादि-साधनत्रययुक्तस्य हृदये मोक्षेच्छोत्पत्तिरवश्यंभाविनी। तदुत्पतौ च ब्रह्मजिज्ञासाऽनिवार्येति ब्रह्मविद्यायाः उपासना कर्तव्या, तेन सर्वविषयकं कल्याणमनिवार्यम्। किं वा तत्त्वं नास्ति ब्रह्मविद्यायां येन कल्याणं न भवेत्? उपनिषद्वदति-

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्य स्विद्धनम्॥[28]

गीतायाञ्च-

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥[29]

अतः सर्वदा वेदान्तविद्यायाः उपासना करणीया, एवञ्च वाल्मीकिरामायणे महर्षिवाल्मीकिः पृच्छति चारित्र्येण च को युक्तः? तं तु औपनिषदं पुरुषं पृच्छामि। अस्य समाधानं प्रयच्छति

25. गीता 17/9.9.10
26. उपनिषद्वाक्यम्। छा. उप. 7/24/3
27. मनुंसहिता 6/33
28. यजुर्वेदः 40/1
29. गीता 18/66

**महर्षिः**—राम एव चरित्रवान् भवति। यतः रामः वेदान्तविद्यापरिनिष्ठितो भवति अत एव **''रामो विग्रहवान् धर्म'** इति धर्मलक्षणं रामायणे प्रतिपादितं भवति। धर्मस्य चरित्रेण सह अन्तःसम्बन्धो विद्यत एव। तादृशधर्मतत्त्वज्ञानात् चरित्रस्य निर्माणं भवत्येव। नीतिशास्त्रकारैरपि प्रतिपादितं यत्—

**आहारनिद्राभयमैथुनं च, सामान्यमेतत् पशुभिर्नराणाम्।**
**धर्मो हि तेषामधिको विशेषो, धर्मेण हीनाः पशुभिः समानाः॥**
**येषां न विद्या न तपो न दानं, ज्ञानं न शीलं न गुणो न धर्मः।**
**ते मर्त्यलोके भुवि भारभूताः, मनुष्यरूपेण मृगाश्चरन्ति॥ इति।**

# शब्दस्य नित्यत्वानित्यत्वविज्ञानम्

डॉ. महानन्दझा

शब्दस्य नित्यत्वानित्यत्वविषयेऽस्ति भारतीयदार्शनिकानां वैमत्यम्। तत्र न्यायवैशेषिकयोः मते ऐन्द्रियकत्वात् आकाशाश्रितत्वाच्च कण्ठताल्वाद्यभिघातेनोत्द्यमानत्वाच्च शब्दस्यानित्यत्वम्। यदि शब्दस्य नित्यत्वं स्यात् तर्हि शब्दराश्यात्मकवेदस्य कोऽपि कर्त्ता न स्यात्। अनुमीयते च तस्य कर्ता शब्दराश्यात्मकवेदस्य पौरुषेयत्वात्, शब्दानाञ्चोत्पत्तिर्विनाशदर्शनात् शब्दानामनित्यत्वमिति सिद्धान्तः नैयायिकानाम्।

"आप्तोपदेशः शब्दः[1]" इति शब्दलक्षणम्, तल्लक्षणे शब्दस्य नित्यत्वविषये भवति दार्शनिकानां विप्रतिपत्तिः। तत्र प्रथमा विप्रतिपत्तिः मीमांसकानाम्। एतेषां नये शब्दस्य आकाशगुणत्वं, सर्वव्यापकत्वं, नित्यत्वम्, अनुत्पद्यमानत्वञ्च। तात्पर्यटीकाकृद्भिः मीमांसकमतमुल्लिख्य उक्तं-अभिघातप्रेरितवायुः श्रवणेन्द्रिसमवेतनित्यशब्दमभिव्यञ्जयति, उद्योतकारः अनुमानं प्रदर्शयति एकः तावद्ब्रूते नित्यः शब्दः अविनश्यदाधारैक द्रव्याकाशगुणत्वात् यदविनश्यदाधारैकद्रव्यकारणगुणश्च तन्नित्यं दृष्टं यथाकाशमहत्वम् तथा शब्दस्तस्मान्नित्य इति, सोऽयं नित्यःसन्नभिव्यक्तिधर्मा, तस्याभिव्यञ्जकाः संयोगविभागनादा[2] इति।

उद्योतकारमतमुपरि तात्पर्यटीकाकारः प्रवदति भेरीदण्डयोः संयोगप्रेरितवायुः श्रवणेन्द्रियं सम्प्राप्य शब्दस्य व्यञ्जकः। एवं वंशदलद्वयविभागप्रेरितवायुः शब्दस्य व्यञ्जकः। परम्परासम्बन्धेन संयोगविभागौ शब्दस्य व्यञ्जकौ, साक्षात्सम्बन्धेन नादः शब्दस्य व्यञ्जकः। आकाशगुणः शब्दः विभुर्नित्योऽभिव्यक्तिधर्मकः[3] इति भोष्योक्त्या ज्ञायते इदं प्रभाकरमतम्।

सांख्यमते यत्र गन्धादयो वर्तन्ते तत्रैव शब्दोऽपि पृथिव्यादिषु वर्तते शब्दस्पर्शादीनामुत्तरोत्तरभूतेषु सत्वस्वीकारात् गन्धादिवत् सत्वादेवाभिघातादिभिरभिव्यज्यमानो न तूपत्तिधर्मकः सांख्यैरनित्यपदार्थानां सत्वाभिव्यक्त्योः स्वीकारात्। गन्धादिसहवृतिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मकः[4] इति।

---

1. न्यायसूत्रम् 1.1.7।
2. न्यायवार्तिके।
3. न्यायभाष्यम् पृ. 17।
4. तदेव पृ. 172।

वैशेषिकशास्त्रे आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवत्''[5] तथा च वैशेषिकसूत्राणि ''श्रोत्रग्रहणो योऽर्थ स शब्दः[6]'' गुणस्य सतोऽपवर्गः कर्मभिः साधर्म्यम्''[7] अनित्यश्चायं कारणतः[8] संयोगात्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः[9] लिङ्गाच्चानित्यः शब्दः[10] अनेन प्रकारेण वैशेषिकानां मते शब्दस्य अनित्यत्वम्।

बौद्धमते वस्तुमात्रस्य क्षणिकत्वात् उत्पत्तिविनाशशीलत्वात् च शब्दस्यानित्यत्वम्। अतएवोक्तं भाष्ये वात्स्यायने महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मकः"[11] इति।

प्रतिपादितविप्रतिपत्तिवाक्यप्रयुक्तशब्दस्य नित्यत्वानित्यत्वे भवति संशयोत्पत्तिः। तत्र किं तत्वमित्याकाक्षायां शब्दस्य अनित्यत्वमिति नैयायिकानां सिद्धान्तः।

शब्दस्योत्पत्तिमत्वात् उत्पत्तिमतोऽनित्यत्वनियमाच्च, इन्द्रियग्राह्यत्वात् इन्द्रियग्राह्यस्यानित्यत्व-नियमाच्च अनित्यत्वम्। तथा च सूत्रम् ''आदिमत्वादैन्द्रियकत्वात् कृतकवदुपचाच्च[12] अत्रेयं जिज्ञासा भवति यत् व्यभिचारात् आदिमत्वादिहेतूनां शब्दानित्यत्वसाधकत्वं न संभवति, यतः साध्याभाववति वृत्तित्वं हि व्यभिचारित्वं, घटध्वंसे ह्यनित्यत्वं साध्यं नास्ति उत्पत्तिमत्वं त्वस्तीति तस्य व्यभिचारित्वं सिद्धम्। घटत्वादावनित्यत्वं नास्ति इन्द्रियग्राह्यत्वं चास्तीति तस्य व्यभिचारित्वं सिद्धम्। येनेन्द्रियेण या व्यक्तिर्गृह्यते तद्गताजातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते इति नियमानुरोधेन ऐन्द्रियकत्वं सामान्ये सिद्धम्। आकाशादावनित्यत्वं नास्ति अनित्यवदुपचारस्तु भवति आकाशस्य प्रदेशः इत्यादिरिति अनित्यवदुपचारस्यापि व्यभिचारित्वं सिद्धम् व्यभिचारिणश्च हेतोः साध्यसाधकत्वं न सम्भवतीति आदिमत्वादिहेतूनामपि पूर्वसूत्रोक्तानां व्यभिचारित्वात् शब्दानित्यत्वसाधकत्वं नोपपद्यते इति चेन्न ''तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः[13] अयमाशयः यत् वास्तविकोपचारिकयोर्नित्यत्वयोः परस्परं भेदः प्रध्वंसे च भाक्तमेव नित्यत्वं नतु तात्विकमिति, अनित्यत्वव्यभिचारित्वं नास्ति। नित्यमित्यत्र किं तावत् तत्त्वम्? अर्थान्तरस्यानुत्पत्तिधर्मकस्यात्महानानुपपत्तिर्नित्यत्वं तच्चाभावे नोपद्यते भाक्तं तु भवति। तत्र यथा जातीयकः शब्दो न तथा जातीयकं कार्यं किञ्चिन्नित्यं दृश्यते इत्यव्यभिचारः[14] इति भाष्यकारः वात्स्यायनः प्राह। यदि शब्दसदृशं किञ्चित्कार्यं नित्यं स्यात्तदा तत्रोत्पत्तिमत्वस्य वृत्तित्वेन व्यभिचारित्वं स्यादपि न चैवमस्तीत्यव्यभिचार इत्युत्पत्तिमत्वेन शब्दस्यानित्यत्वं सिद्धम्।

यच्चैन्द्रियकत्वहेतोः सामान्येऽनित्यत्वव्यभिचारित्वमुक्तं तन्निराकरोति सामान्यनित्यत्वात् इत्यनेन नित्ये सामान्ये वर्तमानत्वेनैन्द्रियकत्वस्यानित्यत्वव्यभिचारित्वं यदुक्तं तन्नोपपद्यते। यत् इन्द्रियसम्बन्धग्राह्यं तत् ऐन्द्रियकमित्युच्यते सामान्यमपि इन्द्रियसम्बन्धग्राह्यमिति तत्र नित्यभूते सामान्ये ऐन्द्रियकत्वं व्यभिचरतीति हेतोः प्रकृतसूत्रेण व्यभिचारनिवृत्यर्थमैन्द्रियकत्वे सन्तानस्य विशेषणत्वादव्यभिचारः। सन्तानानुमानविशेषणात्[15] सन्तानशब्दोऽत्र सामान्यवत्वपरः, अनुमानशब्दश्च ऐन्द्रियकत्वहेतुपरः,

5. तदेव पृ. 172।
6. वैशेषिकसूत्रम् 2.2.21।
7. तदेव 2.2.25।
8. तदेव 2.2.28।
9. तदेव 2.2.31।
10. कणादसूत्रम् 2.2.32।
11. वात्स्यायनभाष्यम् पृ. 172।
12. न्यायसूत्रम् 2.2.13।
13. न्यायसूत्रम् 2.2.15।
14. न्यायभाष्यम् पृ. 176।
15. न्यायसूत्रम् 2.2.16।

तयोर्विशेषणविशेष्यभावश्च सामान्यवत्वे सति ऐन्द्रियकत्वमित्येव। तथा च नैन्द्रियकत्वमात्रेण शब्दस्यानित्यत्वं साध्यते येनोक्तरीत्या व्यभिचारः स्यात् किन्तु सामान्यवत्वे सति ऐन्द्रियकत्त्वादित्यनेन। अस्ति च शब्दे शब्दत्वं सामान्यं यथा घटत्वादिकं घटादिषु नित्ये च सामान्ये सामान्यवत्वं नास्ति आत्मादौ चैन्द्रियकत्वं नास्ति इति सामान्यवत्वे सति ऐन्द्रियकत्वादिति हेतुरनित्यत्वव्यभिचारी न सम्भवतीति तेन शब्दस्यानित्यत्वं सिद्धम्।

कृतकवदुपचारादिति हेतोर्यद् व्यभिचारित्वमुक्तं तदपि न सङ्गच्छते, यतः कारणवतो द्रव्यस्य भागविशेष किं वावयवलक्षणं कारणीभूतं द्रव्यं प्रदेशशब्देनाभिधीयते यथा कम्बलप्रदेशः इति। नित्यानां चाकाशादीनां कारणाभावेन कारणवद् द्रव्यत्वाभावात् प्रदेश एव वस्तुतो नास्ति येनाभिधीयते तथा चाकाशादिषु आकाशप्रदेश इत्यादिरनित्यवदुपचारः प्रदेशव्यवहारो गौण एव न मुख्य इति नित्येषु आकाशादिषु कृतकवदुपचारादिति हेतोर्व्यभिचारो नास्तीति तेन शब्दस्यानित्यत्वं सिद्धम्। उक्तञ्च सूत्रकारेण महर्षिगौतमेन कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् नित्येष्वप्यव्यभिचार इति[16] पूर्वोक्त युक्त्या अस्माभिर्ज्ञायते यत् आकाशगुणत्वात् कण्ठताल्वाद्याभिघातजन्यत्वात् ऐन्द्रियकत्वाच्च शब्दस्यानित्यत्वं सिद्धम्।

पर्यालोचनम्-लोके तावत् कारणात् कार्योत्पत्तिरिति सर्वाभिमतः, असति कारणे कार्यस्योत्पत्तिर्भवितुं न शक्यते। कार्यं सर्वदा अनित्यं भवति, कार्यत्वानित्यत्वयोः अविनाभावदर्शनात् शब्दस्यापि कार्यत्वात् द्रव्याश्रितत्वात् च शब्दोऽनित्यः गुणपदार्थश्च। शब्दात्मककार्यस्य कण्ठताल्वाद्यभिघातसंयोगरूपानित्यकारणात् जायमानत्वात् शब्दोऽनित्येति नैयायिकानां सिद्धान्तः।

अत्र मीमांसकाः आक्षिपन्ति शब्दोऽनित्यः गुणपदार्थश्च भवितुं नार्हति, यतः गुणस्य सर्वत्र साश्रयतया प्रतीयमानत्वादिह च निराश्रयतयैव प्रतीतिर्दर्शनात् प्रत्यक्षविरुद्धत्वाच्च शब्दो द्रव्यमेवेति भाट्टाः।

**श्रोत्रेन्द्रियग्राह्यः शब्दः शब्दत्वजातिमान्।**
**द्रव्यं सर्वगतो नित्यः, कुमारिलमते मतः॥**
**वियद्गुणत्वं शब्दस्य केचिदूचुर्मनीषिणः।**
**प्रत्यक्षादिविरोधाच्च भाट्टपादैरुपेक्षितम्॥[17]**

''शब्दो द्रव्यं साक्षादक्षसबन्धसाक्षात्कार्यत्वात् घटवत्'' शब्दो द्रव्यं सत्वे सत्यनाश्रयत्वात् गगनवत् इत्याद्यनुमानेन शब्दस्य द्रव्यत्वं सिद्धयति। साश्रयत्वेन शब्दस्य प्रतीत्यभावात् शब्देऽनाश्रिततत्वस्य सिद्धिरपि वक्तुं न शक्यते, निराश्रयत्वस्यानुमानाधीनत्वात्। तच्चानुमानम्-विमतं द्रव्यम् (आकाशम्) शब्दाश्रयो न भवति द्रव्यत्वात् पटादिवत्। ताल्वादिव्यापारे शब्दस्य कारणत्वं यत्प्रतिपादितं तन्न सङ्गच्छते, अर्थात् ताल्वादिव्यापारः शब्दस्य कारणं भवितुं नार्हति, यतोऽहि यथा भूखननादेः व्यापारः कन्दमूलोदकादेरनुत्पादकः सन्नभिव्यञ्जकमात्रम् तथैव कण्ठताल्वादिव्यापारः न शब्दोत्पादकः किन्त्वभिव्यञ्जक एव। तदपि अनुमानेन सिद्ध्यति यथा ताल्वादिव्यापारः न शब्दकारणं व्यापारत्वात्

16. न्यायसूत्रम् 2.2.17।
17. मानमेयोदये।

आकुञ्चनादिव्यापारवत्। शब्दो विभुः स्पर्शानर्हद्रव्यत्वात् अनारम्भकत्वे सति अनवयवद्रव्यत्वात् व्योमवत् इत्याद्यनुमानेन शब्दस्य नित्यत्वं विभुत्वञ्च सिद्धयति, अतः शब्दः नित्यः विभुः द्रव्यपदार्थश्च भवति।

गुरुमते किञ्चिद् व्यतिक्रमः दृश्यते। एतेषां नये शब्दोऽऽकाशगुणः नित्यश्चेति। यथा–

**एषा शालिकनाथेन शब्दनित्यत्वसाधनी।**
**प्रभाकरगुरोर्दृष्ट्या न्यायशुद्धिः परीक्षिता।**[18]

''नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्''[19] इत्यस्मिन् सूत्रे जैमिनिः शब्दस्य नित्यत्वमाह। तेन वर्णनित्यत्वं सिद्धयति। अत्र नैयायिकाः समादधति, अयि भो कुमारिल! अस्माभिः यथा श्रोत्रग्राह्यत्वं शब्दस्य स्वीक्रियते, भवतापि तथैव शब्दस्य श्रोत्रग्राह्यत्वमभ्युपेयते। श्रोत्रस्तावत् कर्णशष्कुल्यवच्छिन्ननभ-प्रदेशः। शब्दस्य श्रोत्रग्राह्यत्वात् आकाशगुणत्वं कथं तस्य द्रव्यत्वम्? शब्दो न द्रव्यं श्रोत्रग्राह्यत्वात् शब्दत्ववत् इत्यनुमानेन शब्दस्य द्रव्यत्वाभावत्वं सिद्धयति। एतादृशस्य शब्दस्य कर्मादौ नान्तर्भाव-नीयत्वात् गुणत्वमेव स्वीकर्त्तव्यम्। आकाशाश्रितत्वात् निराश्रितत्वमिति वचनमपि परास्तम्। कण्ठताल्वाद्यभिघातजन्यः शब्दः इति सर्वजनाभिमतस्य अपलापः कर्त्तुं न शक्यते, यतः ताल्वादिव्यापारे शब्दस्य कारणता अनुमानेनैव सिद्धयति। तच्चानुमानम्– ताल्वादिव्यापारः शब्दस्य कारणं भवति। शब्दस्य तदनन्तरभावित्वात्। यो यदनन्तरभावी स तत्कारणकः यथा कुलालव्यापारानन्तर-भावीघटस्तत्कारणकः अतः शब्दे सकरणत्वमस्त्येव अकारणत्वं कथम्? शब्दस्य यन्नित्यत्वं साधितं तन्न समीचीनम् यतः यावन्तः घटपटादयः पदार्थाः सन्ति ते सर्वे प्रयत्नानन्तरीयकत्वात् अनित्यः तथैव शब्दस्यापि कार्यत्वात् ऐन्द्रियकत्वाद् वा अनित्यत्वम्। तदपि अनुमानेन सिद्धयति। तद्यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात् घटवत् जयन्तभट्टेन शब्दानित्यत्वमभ्युपेत्य सम्यग् रूपेणोच्यते अनित्य हेतवः इमे किल कथयन्ति प्रयत्नानन्तरमुपलब्धेः कायः शब्दः[20] इति।

कण्ठताल्वाद्यभिघातसंयोगस्य अनित्यत्वात् तज्जन्यकार्यात्मकशब्दोऽनित्येति यतः कार्यत्वानित्यत्वयोः परस्परं व्याप्त्यात्मकसम्बन्धदर्शनात् शब्दस्यापि कार्यत्वान्नित्यत्वम्। उच्चारणादूर्ध्वमनुपलब्धेरनित्यः शब्दः नह्येनमुच्चरितं मुहूर्तमप्युपलभामहे, तस्माद् विनष्ट इत्यवगच्छामः। करोति शब्दव्यपदेशाच्च कार्यं शब्दः। शब्दं कुरु, शब्दं मा कार्षीः इत्यादिभिः व्यवहारैः नूनं शब्दस्य कार्यत्वमिति।

श्रूयते खलु यद् विकारि भवति तदनित्यम् यथा द्राक्षेक्षुरसादीनां विकार्यत्वात् अनित्यत्वं तथैव शब्दान्तरविकार्यत्वात् शब्दस्याप्यनित्यत्वम्। यथा दध्यत्र इत्यत्र इकारवर्णस्थानापन्नः यकारः दृश्यते कुत्रचित् यकारस्यं स्थाने सम्प्रसारणादि[21] कृते सति इकारो भवति अतः इकारयकारयोः अनित्यत्वं सिद्धम्, तस्मात् शब्दानामनित्यत्वं सुतरामभ्युपेयम्।

---

18. तदेव।
19. जैमिनिसूत्रम्।
20. न्यायमञ्जरी– पृ 287।
21. अष्टाध्यायी 1.1.45।

# योगाङ्गानि स्वरूपविमर्शः

श्रीहरीश उनियालः

योगाङ्गानुष्ठानम् अशुद्धेः वियोगकारणम् विवेकख्यातिस्तु प्राप्तिकारणम्। अत एव अष्टविधयोगांगम् उपस्थापयन् योगसूत्रकारः महर्षिपतञ्जलिः आह–

**यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि॥[1]**

अष्टाङ्गयोगस्यानुष्ठानेन चित्तस्याशुद्धता दूरीभवति, शनैः शनैर्ज्ञानस्य विकासो जायते, अन्ते विवेकख्यातिर्भवति। अष्टाङ्गयोगस्याभासेन शारीरिकमानसिकाध्यात्मिकोन्नतिर्भवति, अविद्या विनश्यति, अन्तःकरणं निर्मलं भवति। आत्मज्ञानस्य प्राप्तिर्भवति। साधको यथा-यथा योगांगानामनुष्ठानं करोति, तथा-तथा चित्तमलं क्षीयते ज्ञानस्योत्कृष्टता च भवति। सात्विकबुद्धिसम्पन्नः साधको अष्टाङ्गयोगसाधनेन चित्तवृत्ति निरोध्यः अनायासेन स्वरूपं साक्षात्कर्तुं प्रभवति।

सत्वगुणस्य कार्यत्वान्मनो दर्पणवत्स्वच्छं वर्तते। यथा यदामालादिभिः दर्पणस्य स्वच्छता आवृत्ता भवति, तदा मलिनं दर्पणं पदार्थानां प्रतिबिम्बं ग्रहीतुं न शक्नोति, तथैव रजस्तमोजन्येन विक्षेपरूपमलेनावृत्तं मनः अतीतानागतादिज्ञानग्रहणे न समर्थं भवति। यदा योगाङ्गानुष्ठानेन रजस्तमोनिवृत्तिद्वारा सर्वविक्षेपनिवृत्तिर्भवति तदा सत्वगुणस्वच्छरूपे स्थितं मनः अतीतानागतादि ज्ञाने समर्थं भवति।[2]

तत्र यमाः पञ्चाऽभिधास्यमानाः नियमाऽपि पञ्च वक्ष्यमाणाः आसनानि च चतुरशीति संख्याकानि[3] वक्ष्यन्ते। प्राणायामः त्रिधा वक्ष्यमाणः, प्रत्याहारः इन्द्रियादिकरणानां या वृत्तयस्तासां विषयेभ्यो व्यावृत्तिः इन्द्रियेषु तद्वृत्तीनां व्यवस्थापनमिति यावत्, धारणा[4] धार्ये स्थूलसूक्ष्मादिकमपि विषयस्वरूपं करणवृत्तिषु यत् सा। ध्यानं ध्यायते स्थूलसूक्ष्मादि यत्किमपि स्वरूपं यत्र वृत्तिषु तत्। समाधिः[5] सम्यग् अधीयते ध्येयं यत्र वृत्तौ सः, इत्येतान्य ष्टाङ्गानि योगस्य सन्तीति।[6]

उपनिषत्सु यानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभेदेन योगस्याष्टौ अङ्गानि उक्तानि तान्येव अष्टावङ्गानि भगवता पतञ्जलिनापि स्वकीये यमनियमासनप्राणायामप्रत्यहार-

---

1. पातञ्जलयोगदर्शनम्, द्वितीयस्साधनपादः सूत्र सं. 29
2. पुराणेतिहासयोः सांख्ययोगदर्शनविमर्शः, सप्तम परिच्छेदः, पृ. सं. 126
3. द्रष्टव्यम् घेरण्डसंहिता, द्वितीयोपदेशः श्लोक सं. 1,2
4. देशबन्धचित्तस्यधारणा, पातञ्जलयोगदर्शनम् तृतीयपादः सू. सं. 1
5. पातञ्जलयोगदर्शनम् तृतीयपादः सूत्र सं. 3
6. योगदर्शनम् श्रीकृष्णबल्लभाचार्यस्वामीनारायण भाष्यसहितम् पृ. सं. 226

धारणा-ध्यान-समाधयोऽष्टावङ्गानि इति योगसूत्रे अपि प्रतिपादितानि। याज्ञवल्क्येनापि याज्ञवल्क्यसंहितायाम्-

**यमश्च नियमश्चैव आसनं च तथैव च।**

**प्राणायामस्तथा गार्गि। प्रत्याहारश्च धारणा।**

**ध्यानं समाधिरेतानि योगाङ्गानि वरानने॥**

(2/23-24)

इति वदता तान्येवाष्टौ योगाङ्गानि स्वीकृतानि। किन्तु योगबिन्दूपनिषदि प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधि-तर्का इति इमानि षडेवाङ्गानि प्रोक्तानि-योगबिन्दूषनिषदि-

**प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा।**

**तर्कश्चैव समाधिश्च षड़ङ्गो योग उच्यते॥35॥**

ननु षण्णामङ्गानां स्वीकारे पूर्वोक्तेभ्यः सूत्रोपनिषद् संहितावचनेभ्यो विरोध इति न वाच्यम्। षड्भिरन्येषामपि उपलक्ष्यकत्वस्वीकारे विरोधस्य दूरेऽपास्ततत्वात् तस्मात् षडङ्गानमष्टाङ्गोपलक्षकत्वान्न काप्यनुपपत्तिः। अत एव पुराणेषु क्वचन अष्टानामङ्गानां कुत्रविच्च षण्णामेवाङ्गानां निर्देशः कृतोऽस्ति।[7]

योगाङ्गानि वक्ष्यमाणानि तेषामनुष्ठानाज्ज्ञानपूर्वकाद्भ्यासादाविवेकख्यातेरशुद्धिक्षये चित्तसत्वस्य प्रकाशावरणलक्षणक्लेशरूपाशुद्धिक्षये या ज्ञानदीप्तिस्तारतम्येन सात्विकः परिणामो विवेकख्यातिपर्यन्तः स तस्या ख्यातेर्हेतुरित्यर्थः। योगाङ्गानुष्ठानादशुद्धिक्षय इत्युक्तं, कानि पुनस्तानि योगाङ्गानीति तेषां स्वरूपमाह-यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोः अष्टावङ्गानि। इह कानिचित् समाधेः साक्षादुपकारकत्वेनान्तरङ्गानि, यथा धारणादीनि। कानिचित् प्रतिपक्षभूतहिंसादिवितर्कोन्मूलनद्वारेण समाधिमुपकुर्वन्ति, यथा यमनियमादीनि तत्राऽऽसनादीनामुत्तरोत्तरमुपकारकत्वम् तद्यथा सत्यासनजये प्राणायामस्थैर्यम्; एव मुत्तरत्रापि योज्यम्-क्रमेणैषां स्वरूपमाह-

**यमाः-**

**अहिंसासत्यास्तेय ब्रह्मचर्यापरिग्रहा यमाः[8]**

तत्र प्राणवियोगप्रयोजनव्यापारो हिंसा, सा च सर्वानर्थहेतुः, तदभावोऽहिंसाहिंसाया सर्वप्रकारेणैव परिहार्यत्वात्प्रथमं तदभावरूपाया अहिंसायाः निर्देशः, सत्यं वाङ्मनसयोर्यथार्थत्वम् स्तेयं परस्वापहरणं तदभावोऽस्तेयम् ब्रह्मचर्यमुपस्थसंयमः, अपरिग्रहो भोगसाधनानामनङ्गीकारः, त एतेऽहिंसादयः पञ्चयमशब्दवाच्या योगाङ्गत्वेन निर्दिष्टाः।

**नियमाः-**

**"शौचसंतोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः[9]॥"**

---

7. पुराणेतितिहासयोः सांख्ययोगदर्शन विमर्शः, सप्तमपरिच्छेदः पृं. सं. 126

शौचं द्विविधं बाह्याभ्यन्तरं च, बाह्यं मृज्जलादिभिः कायादिप्रक्षालनम्, आभ्यन्तरं मैत्र्यादिभिश्चित्तमलानां प्रक्षालनम्, सन्तोषस्तुष्टिः। शेषाः प्रागेव कृतव्याखाना एते शौचादयो नियमशब्दवाच्याः। तपः कायक्लेशाऽकरं चित्तप्रसादजनकं कृच्छ्रचान्द्रायणादि, स्वाध्यायः स्वेष्टदेवताकाष्टाक्षर-षड्क्षरादिमन्त्रजपः, ईश्वरे परमेश्वरे प्रणिधानं सर्वकार्यसमर्पणम्[10], इति नियमाः।

**आसनः–**

**''स्थिरसुखमासनम्''**[11]

आस्यते-अनेनेत्यासनं लक्षणन्तु स्थिरसुख मिति, सुखयतीति सुखं तादृशं सत् स्थिरं यत्, तथा च सुखप्रदत्वे सति शरीरवृत्तिस्थिरत्वम् आसनत्वमिति। तानि च ''आसनानि समस्तानि यावन्तो जीवजन्तवः''।[12]

आसनं प्रयत्नशैथिल्येनाऽऽनन्त्यसमापत्त्या च स्थिरं सुखं भवतीति संबन्धः, यदा यदाऽऽसनं बध्नामीतिच्छां करोति प्रयत्नशैथिल्येऽपि अक्लेशेनैव तदा तदाऽऽसनं संपद्यते, यदा चाऽऽकाशादिगत आनन्त्ये चेतसः समापत्तिः क्रियतेऽवधानेन तदात्म्यमापद्यते तदा देहाहंकाराभावान्नाऽऽसनं दुःखजनकं भवति, अस्मिंश्चासनजये सति समाध्यन्तरायभूता न प्रभवन्ति अङ्गमेजयत्वादयः।।

**प्राणायामः–**

**''तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः''**[13]।।

प्राणवायोः स्थैर्यकरणं प्राणायामः कथ्यते। कीदृशः, श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः, श्वासप्रश्वासौ निरुक्तौ, तयोस्त्रिधा रेचनस्तम्भनपूरणद्वारेण बाह्याभ्यन्तरेषु स्थानेषु गतेः प्रवाहस्य विच्छेदो धारणं प्राणायाम उच्यते।[14] स च चतुर्विधो भयित रेचक-पूरक-कम्भक-केवलकुम्भक भेदात्। तत्र कुक्षिस्थवायोर्वहिः निःसारणं रेचकः, बाह्यं वायुमाकृष्य देहाभ्यन्तरेऽवस्थापनं पूरकः उभयंगतिनिरोधः कुम्भकः सर्वेषां मेलकं केवलकुम्भकं च प्रोच्यते। तत्र द्वादश-षोडश-द्वात्रिंशत्-चतुःषष्टी मात्राभिः पूरकादयो भवन्ति, तथा च त्रिभिः रेचक-कुम्भक-पूरकैः शनैः शनैः प्राणवायौ आधिपत्यं स्थापनं प्राणायामः। मनसा वायोः साक्षात् सम्बन्धः, अत एव प्राणवायौ वशीभूते मनः स्वयमेव वशीभवति।

प्राणायामः श्वासानां व्यायामोऽस्ति, आलस्यं मूढता शारीरिकदौर्वल्यादयो विघ्ना विशेषप्राणायामैः दूरीभवन्ति, योगसाधनायां प्राणायामस्य विशिष्टं स्थानमस्ति। प्राणायामकर्तृणां शरीरस्य स्वास्थ्याय

---

8. पातञ्जलयोगदर्शनम् सूत्र सं. 30
9. पातञ्जलयोगदर्शनम् सूत्रं सं. 32
10. योगदर्शनम्, किरणाऽन्वित भोजवृत्ति सहितम् पृ. सं. 344
11. पातञ्जलयोगदर्शनम्, सूत्र सं. 46
12. घरेण्ड संहिता, द्वितीयोपदेशः श्लोक सं. 1
13. पातञ्जलयोगदर्शनम् सूत्र सं 49
14. योगदर्शनम् किरणाऽन्वित भोजवृत्ति सहितम् पृ. सं. 346

मलशोधकक्रियाणामावश्यकतैव भवति। प्राणायामैः शरीरं तेजस्वि भवति, मानसिकसमतायाः प्राणायामः सहायको भवन्ति। मनोविकारा मानसिकशक्तिभङ्गस्य प्रबला सन्ति हेतवः। प्राणायामसाधकाः मनोविकारान् दूरीकृत्य मानसिकीं समतां स्थापयितुं समर्था भवन्ति। अतो मनोविकारान् दमयितुं मानसिकशरीरिक–समताप्राप्यते च प्राणायामो महानस्ति साधकः।।[15]

**प्रत्याहारः**

**''स्वविषयसम्प्रयोगे चित्तस्वरूपानुकारइवेन्द्रियाणांप्रत्याहारः।।''[16]**

इन्द्रियाणां स्वस्वविषयपरित्यागपूर्वकं चित्तस्वरूपानुकरणमेव प्रत्याहारः। येन क्रियाविशेषानुष्ठानेन इन्द्रियाणि विषयेभ्यः पराङ्मुखी भूय बुद्धितत्वमनुसरेयुः तत्साधनं वा प्रत्याहारः। यथा कूर्मो बाह्यविषयान् निजाङ्गानि संकोचयति तथैव इन्द्रियाणी प्रत्याहारेण विषयेभ्यो व्यावृत्य अन्तः करणाभिमुखं प्रचलन्ति। यथा राज्ञी मधुमक्षिकामेव साधारणा अपि मधुमक्षिका अनुसरन्ति तथैव मनसोऽनुकूलमेव इन्द्रियाणि विषयेषु प्रवर्तन्ते। प्रत्याहारप्रक्रियया मनस इन्द्रियसम्बन्धो विविच्यते। इन्द्रियाणि चान्तःकरणे विलीयन्ते। तथा च बाह्येषु विषयेषु व्यासक्तानामिन्द्रियाणां ततः परावर्तनप्रक्रिया प्रत्याहारः उच्यते। अर्थात् यथा कूर्मो निजान् हस्तपादादीन् अवयवान् स्वस्मिन्नुदरे संकोचयति तथैव योगी स्वकीयानि श्रोत्रादीनि इन्द्रियाणि आत्मनि प्रत्याहरति।[17] उक्तञ्च–

**इन्द्रियाणां हि चरतां विषयेषु स्वभावतः।**
**निग्रहः प्रोच्यते सद्भिः प्रत्याहारः स उच्यते।।3।।**

स्वभावतो विषयेषु विचैरतामिन्द्रियाणां निग्रहो विद्वद्भिः प्रत्याहारः प्रोच्यते!

**धारणाः–**

**''देशबन्धश्चित्तस्य धारणा''[19]।।**

देशे नाभिचक्रनासाग्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यत्स्थिरीकरणं सा चित्तस्य धारणोच्यते, अयमर्थः–मैत्र्यादिचित्तपरिकर्मवासितान्तःकरणेन यमनियमवता जितासनेन परिहृतप्राणविक्षेपेण प्रत्याहृतेन्द्रियग्रामेण निर्बाधे प्रदेश ऋजुकायेन जितद्वन्देन योगिना नासाग्रादौ संप्रज्ञातस्य समावेरभ्यासाय चित्तस्य स्थिरीकरणं कर्तव्यमिति।[20] यत्र देशे ध्येयं चिन्तनीयं तत्र ध्यानाऽऽधारदेशविषये चित्तस्य यो बन्धः सैव धारणा, स्थूलसूक्ष्मादि किमपि विषयस्वरूपं करणवृत्तिषु धार्यं यत् सा धारणा इत्युच्यते।।[21]

---

15. पुराणेतिहासयोः संख्ययोगदर्शनविमर्शः सप्तमपरिच्छेदः पृ. सं. 140
16. पातञ्जलयोगदर्शनम् सूत्र सं. 54
17. पुराणेतिहासयोः साख्ययोगदर्शन विमर्शः पृ. सं. 149
18. कूर्मपुराण अ. 11 श्लोक सं. 38
19. पातञ्जलयोगदर्शनम् तृतीयपादः सूत्र सं. 1
20. योगदर्शनम् किरणाऽन्वित भोजवृत्ति सहितम् पृ. स. 347 तृतीयपादः
21. योगदर्शनम् पृ1. सं 262

**ध्यानम्–**

**"तत्रप्रत्ययैकतानता ध्यानम्"[22]**

भगवत्स्वकपस्य मनसा चिन्तनमेव ध्यानम्। अथवाध्येयाकारे चित्तवृत्तिस्थैर्य धारणाक्रियाध्यासानन्तरं विषयेषु मनस एकतानतास्थापनं वा ध्यानम्। योगमार्गस्य यथा चत्वारो भेदाः तथैव स्थूलज्योतिर्बिन्दुब्रह्मध्यानभेदाद् ध्यानस्यापि चातुर्विध्यम्। ध्यानसाधनामेतद् समाधिप्रवेशेऽद्वितीयं स्थानम्। ध्यातृ-ध्यानध्येयानां पृथकपृथगवभासो ध्यानलक्षणम्। एतत्त्रितयस्य स्वतन्त्रसत्ताविनाशः समाधिरुच्यते। ध्यानस्य लक्षणमेव कृतमस्ति–

**देशावस्थितिमालम्ब ऊर्ध्वं या वृत्तिसन्ततिः।**
**प्रत्ययान्तरसृष्टायाः तद्ध्यानं सूरयो विदुः॥[23]**

**समाधिः--**

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः[24]॥**

तदेवोक्तंलक्षणं ध्यानं यत्रार्थमात्रनिर्भासमर्थाकारसमावेशादुद्भूतार्थरुपं न्यग्भूतज्ञानस्वरुपत्वेन स्वरुपशून्यतामिवाऽऽपद्यते स समाधिरित्युच्यते, सम्यगाधीयत एकाग्री क्रियते विक्षेपान्परिहृत्य मनो यत्र स समाधिः। समाधिर्द्विविधः सम्प्रज्ञातोऽसम्प्रज्ञातश्च। तयोर्यत्र ध्यातृ-ध्यान-ध्येयानां पृथक्-पृथक् प्रतिभासो भवति स सम्प्रज्ञातः समाधिः। अयं सविकल्पः सबीजो वा समाधिः कथ्यते। यत्र च ध्यातृ ध्यानक्रिययोः पृथक् प्रतिभासो न भवति, किन्तु ध्येयाकार एव वृत्तिर्जायते सोऽसम्प्रज्ञातसमाधिः। अयमेव निर्विकल्पो निर्बीजो वा समाधिः प्रोच्यते। एष योगक्रियाभिः दशमुद्रासाधनद्वारा वा नैरन्तर्याभ्यासेन सिध्यति। समाधौ सूक्ष्ममिन्द्रियं विकसति, दिव्यं चक्षुः भवति, आत्मसाक्षात्कारश्च जायते, समाध ऽनवरतं चेष्टाया धैर्यस्याध्यवसायस्य चावश्यकता भवतीति॥

एकस्मिन्विषये धारणाध्यानसमाधित्रयं प्रवर्त्तमानं संयमसंज्ञया व्यवह्रियते। तस्य संयमस्य जंदाभ्यासेन चात्म्योत्पादनात्प्रज्ञाया विवेकख्यातेरालोकः प्रसवो भवति प्रज्ञाज्ञेयं समयागवभासयतीत्यर्थः॥

मनुष्यो यावद् आध्यात्मिकं सत्यं नानुभवति तावत्तस्य चित्तं कलुषितं, बुद्धिश्च दूषिता तिष्ठति। शुद्धेन हृदयेन तीक्ष्णया बुद्ध्या चैवात्मनः सत्यतायाः अनुभवो भवति। योगदर्शनसिद्धान्तानुसारं मोक्षप्राप्तिः आत्मसत्यताज्ञानेनैव सम्भवति, परन्तु ज्ञानमिदं तदैव सम्भवति यदा मनसः सर्वे दूषिता विचार विनश्येयुः, तथा मनः पूर्णं शान्तं स्थिरञ्च स्यात्। चित्तस्य विशुद्धये आत्मप्रकाशोपलब्धये च योगदर्शने इमानि अष्टाविधानि साधनानि निर्दिष्टानि सन्ति, एवं पुराणेषु अपि योगाङ्गानामष्टानां स्वरूप भेदाश्च विस्तरतः प्रोक्ताः सन्ति, तथैव तेषां सम्यक् सिद्धये चित्तवृत्तिनिरोधात्मको योगः परमावश्यकः इति।

---

22. पातञ्जलयोगदर्शनम्, तृतीयपादः सूत्र सं. 2
23. कूर्मपुराण अ. 11 श्लोक स. 40
24. पातञ्जलयोगदर्शनम्, तृतीयपादः सूत्र सं. 3

# सौमिकवेदेराध्यात्मस्वरूपम्

श्रीमद् ओंकारयशवन्तसेलूकरः

**याम्मेधान्देवगणाः पितरश्चोपासते।**
**तया मामद्य मेधयाग्ने मेधाविनं कुरु॥**[1]

संसारेऽस्मिन् अनिष्टपरिहारपूर्वकमिष्टप्राप्त्यर्थमेव मनुष्याणां प्रवृत्तिर्दृश्यते। पुरुषार्थचतुष्टयसाधनाय अलौकिकोपायप्रतिपादनपूर्वकमस्याः सृष्टेरुत्पत्तिसिद्धान्तस्य च परिज्ञानाय वेदानां महती भूमिका विश्वविद्वद्भिः स्वीकृता। ज्ञानविज्ञान- भण्डारेऽस्मिन् वेदे यज्ञमाध्यमेनैव धर्मस्य सृष्टिविज्ञानस्य च ज्ञानमुपदिष्टम्। अत एव समेषां वेदानां यज्ञार्थमेव प्रवृतिर्दृश्यते।[2] कर्मसु यज्ञस्य प्राधान्यं ब्रुवता योगीश्वरेण याज्ञवल्क्येनेदं प्रतिपादितं यत् **'यज्ञो वै श्रेष्ठतमं कर्म'** इति।[3] स्वर्ग-प्राप्त्यर्थं साधनभूतस्यास्य यज्ञस्य व्यापकं वैज्ञानिकञ्च स्वरूपं ब्राह्मणादिग्रन्थेषु अनेकत्र अवलोकयामः। अस्यैवालौकिकयज्ञस्य मूलाधारभूतेयं वेदिः। यज्ञस्य यादृशमलौकिकं स्वरूपं वेदेषूक्तं वेदेऽपि तादृशमलौकिकं वैज्ञानिकञ्च स्वरूपं वैदिकसाहित्येषूक्तम्। यावद्वयं वेदेः विशिष्टं स्वरूपं नावगच्छामः, तावत् **'यज्ञो वै विष्णुः'**[4], तथा **पुरुषो वै यज्ञ**[5] इत्यादीनां श्रुतिवाक्यानां तात्पर्यार्थं ज्ञातुमसमर्थाः भवामः। अतो वेदेरस्याः यदलौकिकं स्वरूपमृषिभिः शतपथब्राह्मणग्रन्थे उपदिष्टं तदेवाधिकृत्य पत्रेऽस्मिन् सौमिकवेदेः आध्यात्मिकं स्वरूपं प्रस्तूयते।

**'योषा वै वेदिः'** इति वचनबलात् वेदिः नाम जगतः मूलतत्त्वस्य (यज्ञस्य) पत्नीस्वरूपा। यथा लोके पत्नीसाहाय्येन सन्ततिर्लभ्यते, तथैव ऋत्विजोऽपि वेदिसाहाय्येन यज्ञफलभूतानि अपूर्वादीनि वैदिकफलानि समुपलभ्यन्ते। अत एव **'विद्यते-लभ्यते (यज्ञफलम्) अनया सा वेदिः'** इति निर्वचनं क्रियते। शतपथब्राह्मणे वेदेः स्वरूपप्रतिपादनावसरे एका कथा वर्णिता। अनया विष्णोः यज्ञस्वरूपमवगच्छामः। कथासारस्तु ईदृशः—पुरा देवाः स्पर्धायामसुरेभ्यः परास्ताः। असुरैरियं पृथिवी प्रतीचीदिशमारभ्य प्राङ्मुखा विभजमानाः अभिजग्मुः। तदा देवा अपि विभजनस्थले गत्वा 'अस्याः पृथिव्याः वयमपि भागिनो भवेम' इतिं ययाचे। असुराश्च वामनं (लघुकायं) विष्णुं दृष्ट्वा 'यावदेवैष विष्णु अभिषेते तावत्परिमाणं स्थानं युष्मभ्यं प्रयच्छाम इत्यूचुः। देवा अपि 'विष्णुर्हि यज्ञः' अतः

1. शु. य. . 33/14
2. वेदा हि यज्ञार्थमभिप्रवृत्ताः-वेदाङ्गज्योतिषम्
3. शत. ब्राह्मणम् 1/7/1/5
4. शत. ब्राह्मणम् 1, 1, 2, 13
5. शत. ब्राह्मणम् 3/5/1

यज्ञसम्मितं यत्स्थानमस्मभ्यं प्रदत्तं तदधिकमिति परस्परं विचार्य यज्ञात्मकं विष्णुं प्राक्-शिरसं निपात्य दक्षिणतः पश्चादुत्तरतश्च क्रमेण गायत्री-त्रिष्टुप्-जगतीछन्दोभिः परिगृह्य पूर्वस्यां दिशि आहवनीयं संस्थाप्य तेन विष्ण्वात्मकेन यज्ञेन पूजितवन्तः। एवं यज्ञश्रमं चरित्वा विष्णोराधारभूतेन स्थानेन अर्थात् अनया वेद्या सर्वामिमां पृथिवीमलभन्त इति।[6] प्रस्तुताख्यानेनापि वेदेः लाभसाधनत्वम् अवगम्यते। सा वेदिः देवयजनी इत्यपरनाम्नापि श्रूयते। प्रस्तुतकथामाध्यमेन ज्ञायते यत् एषा वेदिः साक्षात् विष्णोः तनूस्वरूपेणैवास्मिन्यज्ञे उपस्थिता। यतो हि देवाः विष्णुमेव प्राक् शिरं निपात्य तस्योपरि यज्ञं कृतवन्तः इत्ययुक्तं कथानके। कथानकानुसारं देवाः विष्णुरूपयज्ञपुरुषस्य मुखं पूर्वस्यां दिशि स्थापितवन्तः। सोमयागेऽपि महावेदे पूर्वस्यां दिशि उत्तरवेदिः (आहवनीयो वा) नामकं स्थानमेव यज्ञपुरुषस्य मुखमित्युच्यते।[7] श्रूयते यथा शतपथे **'मुखमेवास्य आहवनीयः'** इति।[8] यथा मनुष्याः सर्वमन्नं मुखेनैव भुञ्जते, तथैव सोम-आज्य-पशु-पुरोडाशादीनि यज्ञपुरुषान्नानि अध्वर्य्वादयः अस्मिन्नेवाग्नौ आहुतिरूपेण प्रक्षिपन्ति। अनेनैवास्याहवनीयस्य मुखत्वं सिध्यति। उक्तं यथा शतपथे यत् **'य यदाहवनीये जुहोति यथा मुखऽआसिञ्चेदेवं तत्'** इति।[9] अनन्तरं **'स्तुप एवास्य यूपः'**[10] इति वचनात् आहवनीयस्य पूर्वस्यां दिशि यो यूपः स यज्ञपुरुषस्य शिखास्थानीयो वर्तते। शिखा यथा दीर्घा वर्तते तथैव यूपस्यापि दीर्घत्वाच्छिखारूप इत्याहुः।

आहवनीयस्य पश्चाद्भागे दशारत्निपरिमितं स्थानं हविर्धानमित्युच्यते। (चित्रसं. 8-9) सोमागस्य सोमलतानामकं होमद्रव्यमस्मिन्नेव मण्डपे स्थापयन्ति। अतः सोमरूपस्य हविषो धारणादेव हविर्धानमिति संज्ञा भवति। **'शिर एवास्य हविर्धानम्'**[11] इत्यनुसारेण मण्डपोऽयं यज्ञपुरुषस्य शिरो वर्तते। शिरसि यथा चत्वारो गर्ताः भवन्ति (कर्णछिद्रे द्वे, नासिके द्वे) तथैव हविर्धानमण्डपेऽपि उपरवस्थाने चत्वारः गर्ताः सन्ति। (चित्रसं. 10) उक्तं यथा **'तद् यऽइमे चत्वारः कूपाः इमावह द्वौ तमेवैतत्करोति। तस्मादुपरवः खनति'** इति।[12]

उपरवाणामुपरि सोमलताकुट्टनाधारभूतं द्वे अभिषवणफलके स्थापयन्ति। तेऽस्य यज्ञपुरुषस्य हनुस्थानीये स्तः।[13] अस्योपरि रक्तवर्णयुक्तं कृष्णाजिनं स्थापयति। तच्च यज्ञपुरुषस्य जिह्वास्वरूपमस्ति, उभयत्र रक्तवर्णसाम्यत्वात्।[14] ऋत्विजः सोमाभिषवार्थं पञ्चग्रावाणः आहरन्ति ते अस्य यज्ञस्य दन्तस्थानीयाः सन्ति। यदा ऋत्विजः सोमाभिषवं कुर्वन्ति तदा यज्ञः स्वयं सोमं चर्वतीत्युच्यते।[15]

---

6. इयं कथा शत. ब्राह्मणे 1/2/5/1-7
7. (चित्रसंख्या द्रष्टव्या)
8. तत्रैव 3/5/3/3
9. शत. ब्राह्मणम् 3/5/3/3
10. शत. ब्राह्मणे 3/54/3/4
11. तत्रैव 3/5/4/1
12. तत्रैव 3/5/3/1
13. हनू हैवास्यैते-शत. ब्राह्मणे 3/5/22
14. अधिषवणं परिकृतं भवति, सर्वरोहितं जिह्वास्यैषा तद्यत्सवरोतिं भवति लोहिनीव हीयं जिह्व। शत. ब्राह्मणम्-3/5/4/23
15. तत्रैव-दन्ताहेवास्य ग्रावाणस्तद्यद्ग्रावाभिरभिशुण्वन्ति यथा दद्भिः प्यायादेवं तत् 3/5/4/24

मनुष्यव्यवहारवदेवास्य यज्ञपुरुषस्य व्यवहारः अत्र परिदृश्यते। निरुक्तग्रन्थे देवातानामाकारचिन्तनप्रसङ्गे **चेतनावद्धि स्तुतयो भवन्ति** इत्यस्यात्र प्रत्यक्षं कर्तुं शक्नुमः।[16] हविर्धानमण्डपोऽयं **'एतद्वै देवानां निष्कैवल्यं यद्धविर्धानम्'** इति वचनात् देवतासम्बन्धिरिति सिध्यति। **'प्राची वै देवानां दिक्'**[17] अतः मण्डपोऽयं प्राग्वंशः कार्यः।

उपर्युक्तप्रसङ्गे हविर्धानस्य शिरत्वेनोल्लेखः प्रदत्तः परन्तु आधुनिकाः विद्वांसः हविर्धानस्थानमेतद् यज्ञपुरुषस्य हृदयस्थानीयत्वेनापि स्वीकुर्वन्ति। तस्य कारणमप्याह यदि आवहनीयं स्थानं मुखं मन्यते, तथा सदोमण्डपं उदरत्वेनोच्यते चेत् हविर्धानस्य वक्षस्थलत्वं सिद्ध्यति। यथा मानवदेहे हृदयस्थाने चत्वारो गर्ताः भवन्ति तथा अत्र उपरवेऽपि सन्ति। हृदये यथा रक्तनिर्माणं तस्य च शुद्धिकरणादिकर्माणि भवन्ति, एवमेवात्र दक्षिणशकटपार्श्वे सोमरसस्य रसनिष्काशनं, निष्काशितस्य च रसस्य शुद्धिकरणं भवति। हविर्धाने विद्यमानं शकटद्वयं वक्षस्थलवदेव प्रतिभाति। एवं हविर्धानस्यास्य वक्षःस्थानीयत्वं साधयन्ति। किन्तु अत्र शतपथे हविर्धानस्य यन्मुखरूपत्वं प्रतिपादितं तदुचितमेव नात्र सन्देहस्यावसरः।

हविर्धानात् पश्चिमभागे सदोमण्डपस्य स्थानमस्ति। (चित्रसंख्या 12) अत्र स्थित्वैव ऋत्विजः स्तोत्र-शस्त्रपाठादिकं कुर्वन्ति। यत्र स्तोत्रशस्त्रादिकं पठ्यते तत्र विश्वेदेवाः समागत्य सीदन्ति तस्मादिदं स्थानं सद इत्युच्यते। **'उदरमेवास्य सदः''**[18] इति वचनात् मण्डपोऽयं उदरत्वेनोक्तः। अस्मिन्नेव मण्डपे शस्त्रादिपाठात् समागताः देवताः हविर्गृह्णन्ति, ऋत्विजश्च सोमरसभक्षणं कुर्वन्ति। भुक्तं सर्वमन्नं उदरे तिष्ठति तस्मात् सदसः उदरस्थानीयत्वं स्पष्टं भवति।[19] अस्मिन् सदसि मध्यभागे एका औदुम्बरी शाखा विद्यते (चित्रसंख्या 13) सा च नाभिस्थानीयोक्ता। यथा नाभिः वस्त्रादिना आच्छाद्यते तथैव औदुम्बरीशाखाऽपि वस्त्रादिभिराच्छादिता वर्तते। तत्रोपविश्योद्गातारः सामगानं कुर्वन्ति। यतो हि नाभिसकाशादेव प्रेरितो वायुः कण्ठताल्वादीनि स्थानानि प्राप्य वर्णरूपो भवति, तस्मादत्रोपविश्य सामानि गीयन्ते। अस्य मण्डपस्य मनुष्यदेवताभ्यां सह सम्बन्धो दृश्यते। देवतासम्बन्धिस्तोत्रशस्त्रपाठात् देवतात्वं, ऋत्विजां सोमशेषभक्षणमत्रैव भवति, अतः मनुष्यपरकत्वपि सिध्यति। उदीची दिक् मनुष्यसम्बन्धित्वात् मण्डपोऽयम् उदग्वंशः क्रियते। सोमपानं तु ऐन्द्रं कर्म उच्यते, तच्चास्मिन्नेव सदोमण्डपे भवति। अतः अस्यापि ऐन्द्रत्वं साधनीयम्।

हविर्धानस्य दक्षिणोत्तरस्यां दिशि मार्जालीयः आग्नीध्रश्चेति द्वौ मण्डपौ स्तः। (चित्रसं 5-6) तौ यज्ञपुरुषस्य बाहू सदृशौ स्तः। तदुक्तं श्रुतौ **'बाहू-एवास्याग्नीध्रश्च मार्जालीयश्चेति**[20] मानवशरीरे यथा बाहू समानान्तरौ स्तः तथैव अनयोः समानपरिमाणत्वात् बाहुत्वं सिध्यति। तयोरपि आग्नीध्रमण्डपः यज्ञपुरुषस्य दक्षिणबाहुः, मार्जालीयश्च वामबाहुः। यथा मनुष्याः दक्षिणहस्ते वज्रादीनि शस्त्राणि गृहीत्वा बहुविधानि वीरकर्माणि कुर्वन्ति, तथैव आग्नीध्रमण्डपसम्बद्धः आग्नीध्र इति नामकः ऋत्विग्विशेषः

16. निरुक्तः 7/2
17. शत. ब्राह्मणम् 3/2/3/16
18. शत. ब्राह्मणम्3/6/1/1
19. तत्रैव (मन्त्रस्य उत्तरार्धः)
20. शत. ब्राह्मणम् 3/5/3/4

स्वहस्ते स्फ्यरूपं शस्त्रं गृहीत्वा सर्वाणि यज्ञाङ्गभूतानि कर्माणि करोति। सदोमण्डपे स्थिताः ऋत्विजो यदा सोमशेषभक्षणं कुर्वन्ति तदा उच्छिष्टपात्राणां मार्जनं मार्जालीये भवति। पात्राणां मार्जनत्वादेव एतत् स्थानं मार्जालीयेति नाम्ना व्यवह्रियते।

सदोमण्डप पश्चाद्भागे प्राग्वंशमण्डपो (प्राचीनवंशमण्डपो वा) विद्यते। (चित्रसं 23) यस्य अंशः-मध्यबलः प्रागग्रो भवति स प्राग्वंशमण्डपः। मण्डपेऽस्मिन् प्रकृतदर्शपौर्णमासेष्टेः वेदिः खराश्च भवन्ति। तत्रैव आहवनीयगार्हपत्यौ खरौ स्तः। (चित्रसं. 26, 27) तौ यज्ञपुरुषस्य जघनदेशवर्तिनौ (पादस्थानीयौ वा) स्तः। तथा चोक्तं वाजिश्रुतौ **'अथ यावेतौ जघनेनाग्नी, पादावेववास्यैतौ'**[21] इति।

एवं यज्ञपुरुषस्य वर्णनं वेदिमाध्यमेन ब्राह्मणग्रन्थे इतस्ततः ऋषिभिः कृतम्। पुरा देवाः विष्णवात्मकस्य यज्ञस्य (वेदेः वा) तावदेव विस्तारः कृतवन्तः यावत् पुरुषाकारोऽस्ति। एतएव वेदिसम्बद्धाः हविर्धानमण्डप- सदोमण्डप-यूपादयः अस्य पुरुषस्यावयवभूताः सन्ति। तस्मादेव **'पुरुषो वै यज्ञः'**[22] इत्युच्यते। यज्ञस्यास्यैतत्पुरूषवत्स्वरूपं पूर्वोक्तवेदिस्वरूपज्ञाने सत्येवावगन्तुं पारयामः।

**'पुरुषो वै यज्ञः'** तथा **'योषा वै वेदिः'** इत्येताभ्यां वचनाभ्यामत्र मिथुनिभावो प्रदर्शितः। मिथुनेनैवेदं सर्वं जनयति। संसारे यथा पुरुषः पत्नीसाहाय्येनैव सन्ततिर्प्राप्नोति तथैव यज्ञोऽयं वेदिसाहाय्येनैव यज्ञफलानि समुत्पादयति। श्रूयते **'योषा वै वेदिः वृषाग्निः, परिगृह्य वै योषा वृषाणं शेते। मिथुनेनैवैतत्प्रजननं क्रियते'**[23] इति।

उपर्युक्तविवेचनेन यज्ञवेदेः यज्ञपुरुषस्य च आध्यात्मिकस्वरूपं ज्ञात्वा यः कश्चिदपि पुमान् यज्ञानुष्ठानमाचरति स तज्ज्ञात्वा तद्वान् भवतीति वचनानुसारं ब्रह्मरूपं यज्ञस्वरूपं ज्ञात्वा ब्रह्मैव भवतीत्यलम्।

---

21. शत. ब्राह्मणम् 3/5/3/6
22. तत्रैव 3/5/3/1
23. शत. ब्राह्मणम् 1/2/5/15

# संकेताक्षरसूची

1. यूपः।
2. आहवनीय (उत्तरवेदिः)
3. चात्वालस्थानम्।
4. उत्करः।
5. आग्निध्रमण्डपः धिष्ण्या च।
6. मार्जालीयमण्डपः धिष्ण्या च।
7. हविर्धानमण्डपः (शिरस्थानीयोऽयम्)।
8. उत्तरशकटः।
9. दक्षिणशकटः।
10. उपरवस्थानम् (चतुर्गर्तयुक्तं स्थानम्)।
11. देवखरः (ग्रहपात्रासादनं स्थानम्)।
12. सदोमण्डपः (उदरस्थानीयोऽयम्)
13. औदुम्बरीया शाखा।
14. चत्वारि आसनानि सन्ति। यत्रोपविष्योद्गातारः समगाणं कुर्वन्ति।
15. मैत्रावरुणधिष्ण्या।
16. होतृधिष्ण्या।
17. ब्राह्मणाच्छंसि धिष्ण्या।
18. पोतृधिष्ण्या।
19. नेष्टृधिष्ण्या।
20. अच्छावाकधिष्ण्या।
21. ब्रह्मासनम्।
22. यजमानासनम्।
23. प्राचीनवंशमण्डपः (प्राग्वंशो वा)।
24. आवस्थयाग्निः।
25. सभ्याग्निः।
26. आहवनीयाग्निः (शालाद्वार्यो वा)।
27. दर्शपूर्णमासवेदिः।
28. घर्मासन्दिः (महावीरपात्रासन्दिः वा)।
29. राजासन्दिः (सम्राडासन्दिः वा)।
30. ब्रह्मासनम्।
31. यजमानासनम्।
32. उद्वासनीयः खरः।
33. उत्करः।
34. जुहोतिस्थानम्।
35. यततिस्थानम्।
36. प्रवृंजनीय खरः। (प्रवर्ग्यस्थानम्)
37. आहवनीयः।
38. दक्षिणाग्निः।
39. पत्नीशाला।
40. यजमानवपनस्थानम्।

# पारस्करगृह्यसूत्रे पुंसवनसंस्कारस्वरूपम्

श्रीनेत्रपालः

शुक्लयजुर्वेदस्य उभयोः शाखयोः प्रातिनिध्यं करोति पारस्करगृह्यसूत्रम्। अस्मिन् पारस्करगृह्यसूत्रे गार्हस्थ्यजीवनस्य धार्मिकानुष्ठानानाम् आचारविचाराणाञ्च विवेचनं वर्तते। 'गृह्य' शब्दः गृहस्थशब्देन सम्बद्ध अस्ति। उक्तमपि–

**'यस्मिनग्नौ पाणिं गृह्णीयात् स गृह्यः।'**[1]

'गृहाय गृहस्थाश्रममास्थाय हितं गृहं तच्च तत् सूत्रं गृह्यसूत्रम्'[2]

**'गृहे भवः गृह्य'** अत्र इदमप्यवधेयं यत् स्मार्ताग्नेरेव गृह्यः **'औपासनम'** आवसथ्यञ्चेति संज्ञा वर्तते। अनेन प्रकारेण गृह्यसूत्रमिदं गृहस्थाश्रमोपयोगिकर्मणां विधानवाचकं वर्तते। पारस्करगृह्यसूत्रे संस्काराणां वर्णनं यथाक्रममेवञ्च सरलरीत्या दरीदृश्यते। तत्रादौ संस्कारशब्दस्य व्युत्पत्तिः पुरस्क्रियते। सम् उपसर्गपूर्वकडुकृञ्धातोः घञ्प्रत्यये कृते सति निष्पन्नोऽयं संस्कारशब्दः। शब्दोऽयं स्व-स्वरूपं स्वयमेव प्रकटयति। आत्मनि, मनसि, बुद्धौ च यन्मालिन्यं तस्य अपनयनं प्रक्षालनं वा संस्कारः। तथा चोक्तम्–

**आत्मशरीरान्यतरनिष्ठो विहितक्रियाजन्योऽतिशयविशेषः संस्कारः।**[3]

अन्यच्च

**संस्कारो नाम स भवति यस्मिञ्जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य'।**[4]

संस्कारशब्दः संस्कृतसाहित्ये बहुव्यापकत्वेन व्यवहृतोऽस्ति। श्रुतिषु,[5] स्मृतिषु,[6] पुराणेषु च सर्वत्र संस्काराणां विषये उल्लेखः प्राप्यते। उपनिषत्सु च संस्कारशब्दः उन्नत्यर्थे प्रयुक्तोऽस्ति। संस्कारान् अनिवार्यान् मत्वा ऋषिभिःसुसंस्कृतसमाजस्य संस्थापनाय प्रयासः कृतः।

---

1. खादि. गृ. 1/5/1
2. पा. गृ. सू. भूमिका, पृ. 14
3. पा. गृ. सू. भूमिका, पृ. 14
4. जैमिनीसू. 3.1.3 शाबरभाष्य
5. अथर्व. 3.23.3
6. मनु. 2/26 वयास 2/13-14, गौतमस्मृतिः

पारस्करगृह्यसूत्रे त्रयोदश, गौतमस्मृतौ चत्वारिंशत्, व्यासस्मृतौ च षोडशसंस्काराणां विवरणं प्राप्यते। पारस्करगृह्यसूत्रे प्रतिपादिताः त्रयोदश संस्काराः इमे सन्ति–

1. विवाहः 2, गर्भाधानम्, 3. पुंसवनम्, 4, सीमन्तोन्नयनम् 5. जातकर्म, 6. नामकरणम् 7. निष्क्रमणम्, 8. अन्नप्राशनम्, 9 चूडाकरणम्, 10. उपनयनम्, 11. केशान्तम्, 12. समावर्तनम्, 13. अन्त्येष्टिः।

इमे हि संस्काराः मानवजीवनं सुसंस्कृतं कुर्वन्ति, सातिशयं गुणाधानं च उद्भावयन्ति। तत्र पारस्करमतमादाय प्रसङ्गादिह पुंसवनसंस्कारस्य सामान्येन परिचयः प्रस्तूयते।

**पुसवनम्**–गर्भाधारणस्य निश्चयानन्तरं गर्भस्थशिशुः 'पुंसवनम्' इति नामक संस्कारेण संस्क्रियते। पुंसवनसंस्कारः सामान्यतः तेन कर्मणा सह सम्बद्धः अस्ति यस्यानुष्ठानेन पुमान् प्रसूयते उक्तमपि शौनकेन–

**'पुमान् प्रसूयते येन कर्मणा तत् पुंसवनमीरितम्।'**[7]

अस्मिन्नवसरे पठ्यमानाः, ऋचः अपि पुत्रोत्पत्तेः अनुमोदनं कुर्वन्ति। यथा–

**पुमांसं पुत्रं जनय तं पुमाननु जायताम्।**
**भवासि पुत्राणां माता जातानां जनयाश्च यान्।।**[8]

पुंसवनसंस्कारस्य कालः

पारस्करगृह्यसूत्रानुसारं संस्कारस्यास्य कालः द्वितीये तृतीये वा मासे अस्ति। तथा च सूत्रितं तेन–

**'पुरा स्पन्दत इति मासे द्वितीये तृतीये वा'।**[9]

**'यदहः पु ँ सा नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्या प्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गांश्च निशायामुदपेषं पिष्टवा पूर्ववदासेचन ँ हिरण्यगर्भोऽद्भ्यः सम्भृत इत्येताभ्याम्'।**[10]

संस्कारोऽयं गर्भस्पन्दनात् द्वितीये तृतीये वा मासे भवति। यदा चन्द्रः पुरुष नाम्ना पुष्यादिनक्षत्रेण युक्तः भवेत्। तस्मिन्नहनि गर्भिणीमुपवास्य स्नापयित्वा अहते वाससी परिधाप्य च वटस्य अवरोहान् तदग्रपल्लवान् ततश्चोभयं रात्रौ पिष्टवा निम्नलिखिताभ्यां मन्त्राभ्यां भर्ता भार्यायाः दक्षिणनासारन्ध्रे

---

7. वीरमि. संस्कारप्रकाश भाग 2 पृ. 167
8. अ. वे. 3/23/3
9. पा. गृ. सू. 1/14/1
10. पा. गृ. सू. 1/14/2

आसेचनं करोति।

**हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम्।।[11]**
**अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्ततताग्रे।**
**तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्त्यस्य देवत्वमाजानमग्रे।।[12]**

आचार्यबृहस्पतिना अस्य संस्कारस्य कालः द्वितीयमासादारभ्यः अष्टममासं यावत् स्वीक्रियते।

**तृतीये मासि कर्त्तव्यं गृष्टेरन्यत्र शोभनम्।**
**गृष्टेश्चतुर्थे मासे तु षष्ठे मासेऽथवाऽष्टमे।।[13]**

तृतीयमासादष्टमासं यावत् इयं प्रक्रिया प्रथमगर्भानन्तरं अर्थात् द्वितीय तृतीयगर्भे कर्तु शक्यते, इति आचार्य बृहस्पतेर्मतम्। यदि भर्ता वीर्यवान् पुत्रं कामयेत तदा गर्भवतीभार्यायाः उपस्थे (अङ्के) जलपूर्णं शरावं निधाय हस्तेन गर्भाशयं स्पृष्ट्वा सुपर्णोऽसि इति अधोलिखितं मन्त्रं जपति।

**'सुपर्णोऽसि गरुत्मांस्त्रिवृते शिरो गायत्रं चक्षुः बृहद्रथन्तरे पक्षौ। स्तोमऽआत्माच्छन्दाꣳस्यङ्गानि यजूꣳषिनाम। साम ते तनूर्वामदेव्यं यज्ञायज्ञियं पुच्छन्धिष्ण्याः शफाः। सुपर्णोऽसि गरुत्मान्दिवं गच्छ स्वः पत।'[14]** तदित्थमाचार्यपारस्करः श्रद्धागमै शब्दैः संस्कारस्यास्य महत्त्वं स्वीचकार।

---

11. शु. य. सं. 13/4
12. शु. य. सं. 31/17
13. वीरमि. सं. प्रकाश भाग 1–व्व पृष्ठ 168
14. शु. य. सं. 12/4

# आर्यसमाजप्रवर्तकस्य श्रीमत्स्वामिदयानन्दस्य संस्कृतभाषायाः प्रचार-प्रसारपरिप्रेक्ष्ये विहितावदानसमीक्षा

श्रीकान्तसिंहः

कर्षनजीतिवारिसूनुरयं मूलशङ्करो भारतवर्षस्य गुर्जरप्रान्तस्य 'टङ्कारा' ऽभिधे ग्रामे यदाऽजनिष्ट तदा वैदेशिकदासतापाशबद्धोऽयं भारतदेशोऽविद्या-ध्वान्ततान्तस्तनुर्मलीमसत्वमापेदे।[1] अस्य देशस्य सर्वाः राष्ट्रियाः सामाजिक्याः, शिक्षायाश्च संस्थाः व्यवस्थाश्च सर्वात्मना नष्टभ्रष्टाः विनष्टाश्चाभूवन्निति के न जानन्ति विज्ञाः। अयं मूलशङ्करो हि यदा प्रबलवैराग्यभावप्राबल्येन धनधान्यपूर्णं स्वस्थानकं विहाय दण्डिस्वामिविरजानन्दकुटीरमाययौ तच्छिष्यताञ्च जग्रात तदा स्वामिश्रीविरजानन्दोऽस्मै शिक्षावसाने[2] गुरुदक्षिणात्वेनेदमादेशचतुष्ट्यं ददौ-

1. देशोपकारं कुरुष्व,
2. सत्यशास्त्राणामध्ययनाध्यापनस्यावरुद्धं द्वारं भूय उद्घाटय,
3. मतमतान्तराणामविद्यापापिनीं विजहि,
4. वैदिकधर्मस्य प्रचुरं प्रचारं प्रसारञ्च विधेहि।

इमे चत्वारः आदेशाः मूलशङ्करेण, संन्यासाश्रमे शिरसि निधाय तेषां पूर्तये यावज्जीवनं यावच्छक्यं प्रयासाः विहिताः। स्वामिदयानन्दस्येयं सुदृढा अवधारणाऽऽसीत् यद् भारतवर्षीयदुर्दशायाः प्रमुखं कारणं वेदविद्यायाः विलोप एव, अत एवासावत्र पठन-पाठने वेदानां पठनं पाठनमनिवार्यममन्यत।[3] स्वसंस्थापितार्यसमाजस्य नियमेष्वस्यानिवार्याध्ययनं श्रवणं च निर्दधे।

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः।।**[4]

---

1. आर्यसमाज के बलिदान, प्रकाशः-गुरुकुल झज्जर, हरियाणा
2. महर्षिदयानन्द का जीवन चरित्र, ले. पं. लेखरामः, प्रकाशकः-आर्य समाज नयाबाँस, दिल्ली, प्रथम संस्करणम्
3. महर्षिदयानन्द का जीवन चरित्र, ले. पं. लेखरामः, प्रकाशकः-आर्य समाज नयाबाँस, दिल्ली, प्रथम संस्करणम् पृ. 804
4. मनुस्मृतिः 2/168

अस्य मानवमतस्य प्रतिच्छायमसौ निम्नाङ्किते महाभाष्यवाक्ये ददर्श-'ब्राह्मणेन निष्कारणो धर्मः षडङ्गोऽध्येयो ज्ञेयश्चे' ति।[5] तथैव चासौ बाल्यकालादेव बालक-बालिकानां संस्कृतशिक्षायै सुव्यवस्थामध्यस्थात्। 14 दिसम्बर, 1868 ईस्वीयाब्दे यदा स्वामिविरजानन्दो दण्डी नश्वरं स्वं देहं विहाय स्वर्ययौ तदा तच्छिष्योऽयं दयानन्दः भारतवर्षस्य बहुषु भागेषु संस्कृतपाठशालासंस्थापनाय दृढीयान् समकल्पयत्। अस्मिन्नेव संरम्भोऽसौ उत्तरप्रदेशस्य फर्रुखावाद मिर्जापुर-कासगञ्ज-छलेसर-वाराणसीप्रभृतिषु नगरेषु वैदिकसंस्कृतपाठशाला अतिष्ठिपत्। आसु पाठशालासु स्वामिदयानन्दः 1926 तमे वैक्रमाब्दे फर्रुखावादनगरे श्रेष्ठिश्रीपन्नीलालमहोदयस्य साहाय्येन 'वैदिकसंस्कृतपाठशालाम्' स्थापयामास। अस्यां किल पाठशालायामारम्भकाले आहत्य छात्राः पञ्चाशदेवासन् किन्तु सार्द्धैकवर्षानन्तरं तेषां संख्या 70-100 (सप्ततितः शतम्) जाता। किन्तु पाठशालाया आरम्भकाले यादृशी पवित्रा भावना पन्नीलालश्रेष्ठिन आसीत् तादृशी कालान्तरे नैवाशिषत्। तद् वंशीयस्य प्रबर्धमानेन दुर्व्यवहारेणोन्मनीभूय स्वामिदयानन्दनैषा पाठशालाऽवरुद्धा। पाठशालायाः कृते यद् धनं संग्रहीतमासीत् तद् वेदभाष्यकरणे व्ययीकृतम्। अस्याः पाठशालायाः बहवोऽतियोग्याः स्नातकाः वेदवेदाङ्गपारगाः देशस्यानेकेषु भागेषु कार्याण्यकुर्वन्। तैरेव संस्कृतभाषायाः प्रचारप्रसारयोः महती गतिः प्रदत्ता। एतेषां पं. देवदत्तः कान्यकुब्जः, पं. भीमसेनसनादयश्च प्रमुखा आस्ताम्। अनयोः श्रीभीमसेनः 'आर्यसिद्धान्त' नाम पत्रिकायाः सम्पादको बभूव इतरश्च पं. ज्वालादत्तो यो हि 'अजमेरस्थं 'वैदिकयन्त्रणालयम्' प्रबन्धयामास पं. दिनेशरामः शास्त्री कासगञ्जस्थ वैदिकपाठशालायाः प्रमुखः पण्डितः आसीत्। पं. कुँवरसेनप्रभृतयो बहवो विद्वांसः फर्रुखावादीय संस्कृतपाठशालायाः छात्राः स्नातका बभूवुः। एषा पाठशाला सप्तवर्षपर्यन्तमेव प्राचलत्। अत्रेदं विशेषेणावधेयं यदेषा पाठशाला स्वामिदयानन्देन श्रीमतो 'गुरुचरनलाल- इत्यस्य भवने सूरजप्रसाद-रामगोपलयोः सहयोगेन जूनमासे 1871 खिष्टाब्दे स्थापिताऽऽसीत्। आरम्भिकेऽहनि हवनं विधाय मङ्गलार्थं 'महाभाष्यस्य' पतञ्जलिविरचितस्य पाठः ऋषिणाऽक्रियत। अस्याः प्रथमोऽध्यापको माथुरश्रीः पं. जुगलकिशोरो नियुक्तः। काले खल्वस्मिन् स्वामिदयानन्दः वेदवेदाङ्गानां प्रचार-प्रसारहेतवे व्रतमिवाग्राहिषत्। अत एवासौ स्थाने-स्थाने संस्कृतपाठशालाः संस्कृतस्थौ। तदानीं महर्षेरयमासीद् अद्भुतः प्रभावो यत्कासगञ्जनगरस्य शतं जनाः पाठशालां स्थापयितुं तं 'सोरो' नगरतः समानेतुं प्रययुः। तेषां गणमान्यानां महाभागानामनुनयेन दयानन्दः अप्रैलमासे 1870 तमे खिष्टाब्दे कासगञ्जनगरे संस्कृतपाठशालां स्थापितवान्। अस्यां किल पाठशालायाम् अष्टाध्यायी-महाभाष्य-मनुष्मृति-वेदानामध्यापनमनिवार्यमक्रियत। एतेषां ग्रन्थानामनध्ययनमेव देशस्य पतनस्य प्रमुखं कारणमसौ मेने।[6] अस्मिन्नेव क्रमे स्वामिदयानन्दः अलीगढजनपदस्य 'छलेसर' नामग्रामे हाठमुकुन्दसिंहस्य सहयोगेन मार्गशीर्षकृष्णपक्षे 1927 वैक्रमाब्दे संस्कृतपाठशालां स्थापितवान्। अत्र भारतदेशस्य सुदूरप्रान्तवर्तिनो विद्यार्थिनः पठन्ति स्म। स्वामिदयानन्दः पञ्चमीं पाठशालां वाराणसीनगरे 'केदारमन्दिरं निकषा पौषकृष्ण 2/1930 वैक्रमाब्दे समारब्धवान्। अस्याः प्रबन्धः मासिकभाटके गृहीते भवने विहितः। 'कविवचनसुधा' नाम पत्रस्य आषाढशुदी 12 वि. सं. 1937 इत्यस्मिन् अङ्के

5. महाभाष्यम् पस्पशाह्निकम्
6. महर्षिदयानन्द का जीवन चरित्र, पृ. 804

